# प्रवासः सुखकरः आसीत्

| | |
|---|---|
| रमेशः - हरि ओम् ! सुरेशः अस्ति वा ? | Hello, is Suresh there ? |
| सुरेशः - आम् ! अस्मि । आगच्छतु भोः । किं चिरात् दर्शनं भवतः ? एषु दिनेषु न दृष्टः खलु भवान् ? | I am here, please come in. I have not seen you for quite some time. |
| र - आम् । अहं नगरे न आसम् । | That is right. I was not in station. |
| सु - कुत्र गतवान् आसीत् ? | Where have you been ? |
| र - अहं प्रवासार्थं गतवान् आसम् । | I was on tour. |
| सु - किं सपरिवारं गतवान् आसीत् ? | You went with your family ? |
| र - न, अस्माकं कार्यालयतः प्रवासः आयोजितः आसीत् । | No, it was organised by our office staff. |
| सु - कुत्र कुत्र गतवान् भवान् ? तत्र किं किं दृष्टवान् ? | Which are all the places you went to ? What did you see ? |
| र - वयं मैसूरु, बेलूरु, हलेबीडु, श्रवणबेळगोलं च गतवन्तः । मैसूरुराजभवनम् अत्यन्तं रमणीयम् । बेलूरु-हलेबीडु शिल्पकलाः, श्रवणबेळगोळस्य गोमटेश्वरः च अतीव नयन-मनोहराः सन्ति । | We went to Mysore, Belur, Halebeedu and Shravana-belagola. The Mysore Palace is beautiful to look at. The works of sculpture in Belur and Halebeedu temples and the statue of Gomateshwara at Shravana-belagola are very grand. |
| सु - प्रवासः कथम् आसीत् ? | How was the journey ? |
| र - प्रवासः अत्यन्तं सुखकरः आसीत् । | It was quite comfortable. |




# चन्दमामा

संस्थापकः - 'चक्रपाणिः' सञ्चालकः - 'नागिरेड्डी'

## प्रमुखौ निर्णयौ



राजधान्यां देहल्यां केरलराज्ये च राज्यसर्वकारेण स्वीकृतौ द्वौ निर्णयौ बालानां सम्बद्धौ, तस्मात् एव चिन्तनार्हौ विषयौ च ।

देहलीनगरसभया प्रकटीकृतस्य नूतनस्य नियमस्य अनुसारं यस्मिन् मार्गे विद्यालयौ विद्यालयाः वा भवन्ति तत्र शालासमये महावाहनानां सञ्चारः निषिद्धः अस्ति ।

राजधानी देहली नवदेहली च इति नगरद्वयेन युक्तम् अस्ति । तयोः नगरयोः शासनाधिकारः क्रमेण देहलीनगरसभायाः नवदेहली नगरसभायाः च अस्ति । पूर्वतनदेहलीनगरस्य मार्गाः अतीव सम्मर्दयुक्ताः बहुभिः विद्यालयैः युक्ताः च सन्ति । किन्तु नवदेहल्यां मार्गाः विशालाः सन्ति । तत्र 'विद्यालययोः मध्ये स्थितम् अन्तरम् अधिकम् एव अस्ति । देहल्याः वसतिप्रदेशेषु निवसन्तः जनाः नगरसभाधिकारिणः विरुद्ध्य न्यायालये स्वसमस्यापरिहारार्थम् व्यवहारः पञ्जीकृतः । तस्मात् देहलीमुख्य-न्यायालयेन नगरसभां प्रति कश्चन आदेशः कृतः यत् - विद्यालयपरिसरे महावाहनानां सञ्चारः निषेद्धव्यः इति । तद्वारा वायुमालिन्यनिवारणम्, अपघातनिवारणं च भविष्यति इति च । वायुमालिन्यं बालानाम् आरोग्ये दुष्परिणामं जनयति इत्यतः न्यायालयेन वायुमालिन्यनियन्त्रणविषये प्राधान्यं दत्तम् ।



केरलेषु अयं निर्णयः सर्वकारेण एव कृतः । विद्यालयपरिसरं परितः धूमपाननिषेधः अपि कृतः । ये एतस्य नियमस्य भङ्गं कुर्वन्ति तैः कठोरदण्डनम् अनुभोक्तव्यं भवति इति सर्वकारेण उक्तम् अस्ति । एवं नियमे सत्यपि कदाचित् केचन प्रौढबालाः धूमपानं कुर्युः इति आशङ्क्यते । केचन शिक्षकाः बालानां (छात्राणां) सम्मुखे धूमपानं न कुर्वन्ति चेदपि शिक्षकप्रकोष्ठे उपविश्य वा धूमपानं कुर्युः एव । एतादृशान् मनसि निधाय एषः आदेशः कृतः अस्ति । शिक्षकाः आदर्शशिक्षकाः भवेयुः इति केरलसर्वकारस्य आशयः ।

अन्येषु राज्येषु अपि यदि एतौ निर्णयौ व्यवहारपथम् आगतौ स्यातां तर्हि वरं भवेत् ।

सम्पुटः - १२ सप्टेम्बर् - १९९५ सञ्चिका - ६

प्रतिकृतिमूल्यं - रू. ५.०० * वार्षिकं ग्राहकशुल्कं - रू. ६०.००



# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| अजः - | Goat | नीडम् - | Nest |
| अनृतम् - | Lie | पञ्जरम् - | Cage |
| अरित्रम् - | Oar | पिधानम् - | Closing |
| आतपः - | Sunshine | प्रजावती - | Elder brother's wife |
| उत्तरीयम् - | Upper cloth | प्रसेवः - | Sack |
| उत्पाट्य - | Having uprooted | भिनत्ति - | Destroys |
| ऋजुः - | Straight | मण्डः - | Cream |
| कुटीरम् - | Hut | मधु - | Honey |
| कुम्भकारः - | Potter | मेषः - | Sheep |
| कूपी - | Bottle | रज्जुः - | Rope |
| कौशेयम् - | Silk | वन्दिनः - | Praisers |
| खुरः - | Hoof | वारं वारम् - | Again and again |
| गुहा - | Cave | विकीर्य - | Having spread |
| गोधा - | Iguana | व्याधः - | Hunter |
| गोधूमः - | Wheat | व्रणः - | Wound |
| चञ्चूः - | Beak | षोडश - | Sixteen |
| त्वरितम् - | Quickly | सन्नाहः - | Preparation |
| दारुः - | Firewood | सिकताः - | Sand |
| दार्वाघाटः - | Woodpecker | स्फीतम् - | Enlarged |
| धूमः - | Smoke | हरिणाज़िनम् - | Deer-skin |

वार्ताविशेषः -

# अट्लाण्टिक्-महासमुद्रे 'लघुभारतम्'

करीबियन्देशस्य ट्रिनिडाड्-टोबागोतः विशेषतया आमन्त्रितः भारतदेशस्य राष्ट्रपतिः डा।। शङ्करदयाल्शर्मा सद्यः एव मुख्यातिथित्वेन तत्र गतवान् आसीत् । तत्र गत्वा वासम् आरब्धवद्भिः भारतीयैः १५० वर्षाणि यापितानि । १५० वर्षाणाम् अनन्तरं कार्यक्रमम् आचरितुम् इष्टवन्तः ते कार्यक्रमस्य यशस्वितायै भारतस्य राष्ट्रपतिम् आमन्त्रितवन्तः आसन् । ऐदम्प्राथम्येन तत्र गतैः भारतीयैः १८४५ तमे वर्षे मे ३० दिनाङ्के वासः आरब्धः आसीत् ।

अमेरिकादेशस्य संशोधकः क्रिस्टोफर्-कोलम्बस्वर्यः दक्षिणामेरिकायाः पूर्वभागस्य अपरपार्श्वे यः ट्रिनिडाड्द्वीपः अस्ति, तं द्वीपं १४९८ तमे वर्षे प्राप्तवान् इति इतिहासात् ज्ञायते । अनन्तरकाले सः द्वीपः स्पैन् कालनि जातम् । १८०२ तमे वर्षे सः द्वीपः ब्रिटिष्जनैः स्वायत्तीकृतः । ट्रिनिडाड्समीपस्थः टोबागोद्वीपः अपि ब्रिटन्देशेन स्वाधीनीकृतः ।

एतस्मिन् द्वीपद्वये इक्षुः सम्यक् वर्धते । अत्र कार्यार्थं ब्रिटिष्प्रमुखाः कर्मकरान् इच्छन्ति स्म । तेषु दिनेषु भारतं ब्रिटिष्जनैः पाल्यमानम् आसीत् । तदा ते भारतस्य प्रमुखेभ्यः कलकत्ता- नागपुरप्रदेशेभ्यः कर्मकरान् ट्रिनिडाड्टोबागोद्वीपं नेतुं यत्नं कृतवन्तः । कलकत्तानौकानिस्स्थानके 'फेटल्रोजक्' नामिकायाः नौकायाः द्वारा २३० भारतीयान् तत्र प्रेषितवन्तः । आतङ्केन एव स्वभविष्यं चिन्तयन्तः भारतीयाः इदानीन्तनराजधानी या पोर्ट् आफ् स्पेयिन् अस्ति, तत्समीपे स्थितं नेल्सन्द्वीपं कूलिद्वीपं च गत्वा तत्र वासम् आरब्धवन्तः । ततः ७० वर्षपर्यन्तम् अपि ब्रिटिष्नायकाः उत्तर-प्रदेशतः, बिहारतः, दक्षिणभारतस्य केभ्यश्चित् नगरेभ्यः च कर्मकरान् तत्र प्रेषितवन्तः । एवमेव ब्रिटिष्जनाः आफ्रिकादेशतः अपि कर्मकरान् नीतवन्तः । इदानीं ट्रिनिडाड् टोबागो जनसङ्ख्या सामान्यतः २०,००,००० अस्ति । एतेषु भारतीयाः आफ्रिकाजनाः च समसङ्ख्याकाः सन्ति ।

ट्रिनिडाड्-टोबागोद्वीपयोः वसन्तः भारतीयाः इदानीम् अपि पूर्वजानां जन्मस्थलं भारतं स्मरन्ति । तेषां वेषभूषणानि, आहारपद्धतिः, धार्मिक-सम्प्रदायाः, आचारविचाराः च भारतीयाः एव सन्ति । तत्रत्यैः भारतीयैः हिन्दी, बङ्गाली, पञ्जाबीभाषाः उपयुज्यन्ते । भोजपुरी, मैथिली, सन्थाली, नेपालीभाषाभाषिणः अपि तत्र सन्ति । तत्रत्यानां ग्रामाणां नामानि अपि तैः एवं कृतम् अस्ति - मधुरा, लक्नो, कान्पुर्चन्दर्, नागोर्, मद्रास्, मलबार् ल्याण्ड्स्, दिल्लीरोड्, गोल्कोण्ड च इति ।

अस्माकं देशतः प्रथमं तत्र गतः नूरहासन् अलीवर्यः वदति यत् - समुद्रेण वयं परस्परं दूरीकृताः चेदपि, अस्माकं भारतवासिनां च हृदयं तु अत्यन्तं समीपे एव अस्ति इति ।

राष्ट्रपतिः डा।। शङ्करदयालशर्मा सन्तोषं प्रकटयन् उक्तवान् - 'ट्रिनिडाड्-टोबागोयुग्मं लघुभारतदेशः एव' इति ।





# स्वभावपरिवर्तनम्

गोविन्दपुरवासिनः रामराजस्य महती सम्पत्तिः आसीत् । तस्य द्वौ पुत्रौ । तयोः नाम केशवः माधवः च इति । तदीयौ उभौ अपि पुत्रौ परिश्रमशीलौ बुद्धिमन्तौ च । तथापि पितुः रामराजस्य मनश्शान्तिः न आसीत् । कारणं तस्य पत्न्याः शान्तायाः बहुभाषित्वं कलहप्रियता च ।

इतरेषां दोषान्वेषणं शान्तायाः वैशिष्ट्यम् । पत्न्याः स्वभावात् खिन्नः रामराजः बन्धुवर्गस्य धर्मराजस्य पुत्र्या कमलया सह ज्येष्ठपुत्रस्य केशवस्य विवाहं निर्वर्तितवान् । रामराजस्य आशयः आसीत् यत् - बन्धुः इत्यतः पूर्वपरिचितायाः श्वश्र्वाः शान्तायाः स्वभावम् अवगत्य स्नुषा कमला समञ्जनं करिष्यति इति । किन्तु प्रतिपदं दोषं प्रदर्शयन्त्याः, तेन च कलहं कुर्वत्याः श्वश्र्वाः व्यवहारम् असहमाना कमला - 'पत्युः मम च निवासः यदि पृथक् स्यात्, तर्हि एव अहं प्रत्यागमिष्यामि' इति उक्त्वा मातृगृहं गतवती ।

सप्ताहः अतीतः । समस्यापरिहारकाः केचन धर्मराजेन सह रामराजसमीपम् आगत्य तम् उक्तवन्तः - 'पृथग्वासेन एव कमला सुखेन जीवितुं शक्नोति, अन्यथा न' इति ।

रामराजः एतां व्यवस्थाम् अङ्गीकृतवान् । ततः केषुचित् दिनेषु एव केशवः पत्न्या कमलया सह तस्मिन् एव ग्रामे पृथक् वासम् आरब्धवान् । केचन मासाः अतीताः । केशवस्य पुत्रः जातः ।

पौत्रेण सह कालयापनं कर्तुं न शक्यते इत्यतः रामराजः अतीव खिन्नः आसीत् । पत्न्याः शान्तायाः स्वभावकारणतः एव ज्येष्ठपुत्रः केशवः पृथक् निवसन् आसीत्, इत्यतः द्वितीयस्य पुत्रस्य माधवस्य विवाहविषये गभीरं चिन्तयति स्म सः ।

कदाचित् रामराजः पार्श्वग्रामवासिनं मित्रं नारायणं द्रष्टुं गतवान् । नारायणः रामराजस्य अपेक्षया धनिकः न स्यात् नाम, किन्तु सः निर्धनः तु न आसीत् ।

चिरात् आगतं मित्रं रामराजं दृष्ट्वा अतीव सन्तुष्टः नारायणः कुशलादिकं पृष्ट्वा आत्मीयतया तेन सह वार्तालापं कृतवान् । मित्रम् आगतम् अस्ति इति नारायणः पत्नीं विशेषपाकं कर्तुं सूचितवान् ।

भोजनं समाप्तम् । भोजनानन्तरम् उभौ अपि स्नेहितौ गृहस्य पृष्टतः विद्यमानायां वाटिकायां स्थितायाम् अन्दोलिकायाम् उपविश्य जल्पनम् आरब्धवन्तौ ।

किञ्चित्कालानन्तरं कर्मकरद्वारा काञ्चित् पेटिकां वाहयित्वा आगतः कश्चित् नारायणम् उक्तवान् - "स्वामिन् ! भवतः पुत्री कौशेयशाटिकाः आवश्यिकाः इति वारं वारम् उक्तवती आसीत् माम् । अतः तादृशीः शाटिकाः आनीतवान् अस्मि" इति ।

शाटिकायाः दर्शनार्थं नारायणः पुत्रीं विमलाम् आहूतवान् । विमला आगतवती । वणिक् विमलां सविनयम् उक्तवान् - "भगिनि ! भवत्या उक्ताः शाटिकाः मया आनीताः सन्ति" इति उक्त्वा कर्मकरम् उक्तवान् - "पेटिकाम् उद्घाट्य शाटिकाः दर्शयतु" इति ।

एतत् श्रुत्वा विमला 'पेटिकायाः उद्घाटनं मास्तु इति सङ्केतेन कर्मकरं सूचयित्वा 'क्षणं तिष्ठतु । इदानीम् एव आगमिष्यामि' इति उक्त्वा गृहस्य अन्तः गतवती ।



किञ्चित्कालानन्तरं विमला पुरातना इव दृश्यमानां काञ्चित् शाटिकां गृहीत्वा आगतवती, 'सकृत् एतां शाटिकां पश्यतु' इति वणिजम् उक्तवती च ।

तया आनीतां शाटिकां दृष्टवतः वणिजः मुखं कान्तिहीनं जातम् । तथापि क्षणाभ्यन्तरे आत्मानं निगृह्य "एतां हरिद्वर्णीयां शाटिकां कुत्र क्रीतवती भवती ?" इति पृष्टवान् ।

तदा विमला मन्दहासपूर्वकं - 'भवतः सकाशात् एव क्रीता एषा शाटिका इति वदामि चेत् भवतः आश्चर्यं भवेत्' इति उक्तवती ।

एतत् श्रुत्वा अपि वणिक् आत्मानं समर्थयन् उक्तवान् - "भवती विनोदं कुर्वती अस्ति । अहं कदापि एतादृशीनां



हरिद्वर्णीयशाटिकानां विक्रयणं न करोमि एव'' इति।

तदा विमला गम्भीरस्वरेण उक्तवती – ''भोः ! गतसन्दर्भे यदा अत्र भवता आगतं, तदापि भवान् एतादृशैः मधुरवचनैः एव मां वञ्चितवान् । अधिकमूल्येन शाटिकां मह्यं विक्रीय गतवान् । सकृत् क्षालनेन एव एषा शाटिका एतादृशीं स्थितिं प्राप्तवती अस्ति । एकवारं कृता वञ्चना अस्माभिः न ज्ञायेत । वञ्चनया भवान् प्रभूतं धनं सम्पादयेत् अपि। किन्तु तेन भवद्विषयकं जनानां गौरवं तु सर्वथा नष्टं भवति'' इति।

विमलायाः वचनं श्रुत्वा म्लानमुखः वणिक् किमपि वक्तुम् उद्युक्तः । तावता विमला एव पुनः उक्तवती – ''भगवता मानवेभ्यः जिह्वा अनुगृहीता यत्, तत् स्वमधुरवचनद्वारा भावप्रकटनार्थम्, न तु बहुभाषितुं वा अन्येषां पीडनपूर्वकं स्वयं सन्तोषम् अनुभवितुं वा । एतद्विषये भवता किमपि वक्तव्यं नास्ति। भवान् गन्तुम् अर्हति इतः'' इति।

एतस्मात् खिन्नः वणिक् किमपि अनुक्त्वा कर्मकरेण सह ततः मौनं निर्गतवान्।

तावत्पर्यन्तं प्रवृत्तं सर्वं दृष्ट्वा रामराजः विमलाम् उद्दिश्य – ''वत्से! तेन वणिजेन सह भवती अत्यन्तं कठोरं व्यवहृतवती खलु ! भवत्याः भीतिः न जाता वा ?'' इति पृष्टवान्।

तदा विमला मन्दहासपूर्वकं रामराजम् उक्तवती – ''अस्मासु यदि दोषः नास्ति, तर्हि भीतिः किमर्थम् ? विना कारणं वयं भयम् अनुभवामः चेत् एतादृशाः अस्माकं भीतेः सौजन्यस्य च दुरुपयोगं कुर्वन्ति । तेन अस्माकं हानिः एव भविष्यति'' इति।

विमलायाः एतत् वचनं श्रुत्वा रामराजः अतीव सन्तुष्टः।

अनन्तरं सायङ्कालपर्यन्तम् अपि रामराजः मित्रेण नारायणेन सह वार्तालापं कृतवान्। तथापि तस्य मनः अन्यत् किमपि चिन्तयति स्म।

सायङ्काले स्वग्रामं प्रति गमनात्पूर्वं रामराजः नारायणं पृष्टवान् – ''मित्र ! अहं भवन्तं किमपि प्रष्टुम् इच्छामि । भवान् अङ्गीकरोति किम् ?'' इति।

एतत् श्रुत्वा नारायणः आश्चर्येण –



''अवश्यं पृच्छतु भवान्। किमर्थं सङ्कोचः ? आत्मीयस्नेहितः भवान् पृच्छति चेत् अहम् अवश्यम् अङ्गीकरोमि। अपि च भवान् अपि प्रष्टुं योग्यम् एव पृच्छति इति मम विश्वासः अस्ति । भवतः आशयः कः इति वदतु तावत्'' इति उक्तवान्।

''भवतः पुत्री विमला मम स्नुषा भवतु इति मम आशयः'' इति उक्तवान् रामराजः।

एतत् श्रुत्वा अतीव सन्तुष्टः नारायणः स्नेहितम् आलिङ्ग्य उक्तवान् - ''मित्र ! वरदानेन माम् अनुग्रहीतुम् इच्छन् 'भवता मम आशयः पूरणीयः' इति वदन् अस्ति खलु भवान्। वस्तुतः मम पुत्री भाग्यशालिनी'' इति।

''अहं ग्रामं गत्वा गृहसदस्यान् एतं विषयं निवेद्य यावच्छीघ्रं विवाहव्यवस्थां करिष्यामि । भवान् अपि पुत्रीं विमलां भवतः बान्धवान् च विषयं सूचयतु'' इति उक्त्वा ततः स्वग्रामं प्रति प्रस्थितः रामराजः।

रामराजः गृहं गत्वा द्वितीयपुत्रं माधवं विवाहविषयं निवेद्य - ''वत्स ! भवतः प्रजावती अतीव मृदुस्वभावयुता आसीत् । अतः कठोरस्वभावयुतायाः श्वश्र्वाः व्यवहारम् असहमाना सा अस्मिन् गृहे स्थातुं न इष्टवती। भवतः भाविनी पत्नी विमला बुद्धिमती निर्दाक्षिण्यस्वभावयुता च। भवतः मातरं सन्मार्गे आनेतुं सा शक्नोति इति मम विश्वासः । यतः तस्याः व्यवहारः मया प्रत्यक्षं दृष्टः । विमलायाः स्वभावकारणतः व्यवहारकारणतः च भवतः प्रजावती अग्रजः पुनः एतद्गृहं प्रति आगत्य अस्माभिः सह एव वसतः इति मम आशा'' इति उक्तवान्।

अनन्तरदिनेषु वधूदर्शनकार्यक्रमः प्रवृत्तः । वधूवरौ परस्परम् इष्टवन्तौ । रामराजस्य पत्नी शान्ता वरदक्षिणारूपेण प्रभूतं धनं स्वीकृतवती। विना विघ्नं विवाहः सम्पन्नः।

विमला पतिगृहम् आगतवती। केषुचित् एव दिनेषु विमला श्वश्र्वाः स्वभावं ज्ञातवती। यद्यपि विमलया दोषः न क्रियते स्म, तथापि शान्ता स्नुषायाः कार्येषु लोपं प्रदर्शयन्ती तां निन्दति स्म । एवं सत्यपि विमला श्वश्र्वाः विरोधं न प्रकटयति स्म,



अपि तु सर्वं मौनं सहते स्म । एतस्मात् रामराजः अतीव खिन्नः। यतः तस्य आशयः आसीत् - विमला स्वव्यवहारेण पत्नीं शान्तां सन्मार्गे प्रवर्तयति इति । तथापि दिनेषु गतेषु परिस्थितिः सम्यक् भवेत् इति मनसः समाधानं प्राप्तवान् रामराजः।

एकं वर्षम् अतीतम् । शान्तायाः स्वभावे किञ्चिदपि परिवर्तनं न जातम् । विमला अपि अत्यन्तं सहनया एव व्यवहरति स्म श्वश्र्वा सह।

कदाचित् शान्ता देवालयं गतवती आसीत्। गृहे पत्न्याः शान्तायाः अनुपस्थितिं ज्ञात्वा एषः एव योग्यः समयः इति विचिन्त्य रामराजः स्नुषाम् उक्तवान् - "वत्से ! विमले ! भवत्याः एतत् गृहं प्रति आगमनात् आरभ्य अहम् सर्वं परिशीलयन् अस्मि । भवत्याः श्वश्रूः विना कारणं भवतीं निन्दति। किन्तु भवती मौनं सहते। एतस्मात् मम सन्देहः भवति यत् - तस्मिन् दिने मातृगृहे शाटिकाविक्रयिकेण सह कठोरं व्यवहृतवती भवती एव वा इति" इति।

श्वशुरस्य वचनं श्रुत्वा विमला मन्दहासपूर्वकम् उक्तवती - "शाटिकाविक्रयिकेण सह मया कठोरं व्यवहृतम् इति यत् तस्य कारणं - वणिजः मम च कोऽपि सम्बन्धः नास्ति। किन्तु अत्र या मां निन्दति, सा मम पत्युः जन्मदात्री माता। अतः तया सह कठोरव्यवहारं मम मनः न अङ्गीकरोति । अपि च सहनया व्यवह्रियते चेत् एव गृहे शान्तिः भविष्यति, अन्यथा गृहं रणरङ्गम् इव सङ्घर्षस्थानं भविष्यति" इति।

स्नुषायाः सौजन्यं दृष्ट्वा रामराजस्य नेत्रे अश्रुपूर्णे जाते । सः वात्सल्येन स्नुषाम् उद्दिश्य - "वत्से ! भवती वयसा कनिष्ठा चेदपि हितवचनैः मां बोधितवती । किन्तु भवत्याः सौजन्यस्य दुरुपयोगं कुर्वती भवत्याः श्वश्रूः भवतीम् इतोऽपि अधिकं पीडयेत् अपि। तदा भवत्याः सहनाशक्तिः क्षीणा भवेत्। तस्य निवारणार्थं भवती श्वश्रूं सन्मार्गं बोधयिष्यति इति मम आशा आसीत्। किन्तु अविवेकिनां हितवचनबोधनं महते क्लेशाय इति अद्य ज्ञातं मया । विधिलिखितं केन वा मार्जयितुं शक्यते ? सुशीलवती स्नुषा आनीता चेदपि किमपि

प्रयोजनं न जातम्'' इति वदन् उत्तरीयं स्कन्धे स्थापयित्वा गृहात् बहिः गतवान्।

गृहात् बहिः गच्छतः रामराजस्य अभिमुखम् आगतवती देवालयतः प्रत्यागच्छन्ती शान्ता। रामराजः पत्न्याः मुखम् अपि द्रष्टुम् अनिच्छन् शिरः अवनमय्य ततः निर्गतवान्।

तस्मिन् दिने रात्रौ भोजनसमये स्नुषां न निन्दितवती शान्ता, अपि तु सा शान्तमनस्का आसीत्। शान्ता भोजनसमये पतिम् उद्दिश्य - ''श्वः उत्तमं दिनम् अस्ति। भवतः समयावकाशः भवेत् वा?'' इति पृष्टवती।

'किमर्थम्?' इति कोपेन एव पृष्टवान् रामराजः।

तदा शान्ता शिरः अवनमय्य उक्तवती - ''आवाम् उभौ अपि गत्वा ज्येष्ठपुत्रं केशवं, स्नुषां च गृहं प्रति आनेष्यावः'' इति।

पत्न्याः वचनेन आश्चर्यचकितः रामराजः - ''किमिदम्? कः विशेषः? कथम् एतादृशं परिवर्तनं भवत्याम्'' इति पृष्टवान्।

तदा शान्ता अश्रूणि स्रावयन्ती उक्तवती - ''अद्य सायङ्काले देवालये हरिकथा न आसीत्। अतः अहं तत्क्षणं गृहं प्रत्यागतवती। तस्मिन् समये मद्विषये एव भवतः विमलायाः च परस्परं सम्भाषणं प्रचलति स्म। विमलायाः कथनानुसारं गृहे यदि शान्तिः आत्मीयता च आवश्यकी, तर्हि प्रथमं मानवीयता सम्पादनीया। अद्य अहं मम दोषं ज्ञातवती'' इति।

पत्न्याः शान्तायाः व्यवहारे महत् परिवर्तनं जातम् इत्यतः रामराजः अतीव सन्तुष्टः। सः पत्नीं हसन् उक्तवान् - ''शान्तिमयस्य जीवनस्य मूलसूत्रम् अद्य ज्ञातं भवत्या। भवत्याः स्वभावपरिवर्तनेन वयम् अनुगृहीताः स्मः'' इति।

''आम्! एतम् अल्पं विषयं ज्येष्ठा स्नुषा यदि पूर्वमेव मां बोधितवती स्यात्, तर्हि एवं प्रकरणं न अभविष्यत्। भवतु। इदानीं वा मया ज्ञातः खलु मम दोषः। इतःपरम् अस्माकं गृहे सर्वदा सुखसन्तोषादयः भविष्यन्ति'' इति हसन्ती उक्तवती शान्ता।



# तथास्तु

कदाचित् त्रयः नौकायानेन प्रयाणं कुर्वन्तः आसन्। प्रयाणसमये अकस्मात् उत्पन्नात् चण्डमारुतात् नौका डोलायमाना जाता, क्षणाभ्यन्तरे जले निमग्ना च। तदा ते प्रयाणिकाः कथञ्चित् आत्मानं रक्षितुम् इच्छन्तः जले प्राप्तस्य कस्यचित् शुष्ककाष्ठस्य साहाय्येन अग्रे गच्छन्तः कञ्चित् द्वीपं प्राप्तवन्तः। तस्मिन् द्वीपे केऽपि न निवसन्ति स्म। किन्तु तत्र विविधफलभरितवृक्षाः आसन्। काचित् नदी अपि आसीत्। नद्यां बहवः मत्स्याः आसन्। ते त्रयः अपि फलानि मत्स्यान् च खादन्तः, द्यूतं च क्रीडन्तः कालं यापयन्ति स्म।

तेषु त्रिषु प्रथमः ग्रामज्येष्ठः। द्वितीयः कृषिकः। तृतीयः अलसः। कदाचित् त्रयः अपि समुद्रतीरे विहारं कुर्वन्तः आसन्। तदा सिकतासु स्थिता काचित् कूपी ग्रामज्येष्ठेन दृष्टा। कृषिकः तां कूपीं हस्तेन गृहीतवान्। अलसः कूप्याः आवरणं निष्कासितवान्। अपरक्षणे एव तस्याः कूपीतः कश्चित् पिशाचः 'हा' इति उच्चैः हसन् बहिः आगतवान्।

पिशाचस्य दर्शनात् भीताः त्रयः अपि ततः पलायितुम् उद्युक्ताः। तदा पिशाचः उक्तवान् - ''क्षणं तिष्ठन्तु। मां दृष्ट्वा भीताः मा भवन्तु। कूपीतः मां मोचितवतां भवतां प्रत्युपकाररूपेण भवताम् आशाः पूरयितुम् इच्छामि अहम्। अतः भवन्तः त्रयः अपि भवदिष्टं प्रार्थयन्तु'' इति।

''ग्रामीणसमस्यानां निवारणार्थं मया यावच्छीघ्रं स्वग्रामः प्राप्तव्यः'' इति उक्तवान् ग्रामज्येष्ठः।

पिशाचः 'तथास्तु' इति उक्तवान्।

कृषिकः उक्तवान् - ''इदानीं धान्यसस्यानां कर्तनसमयः अस्ति। अतः मया मम क्षेत्रं गन्तव्यम्'' इति।

'तथास्तु' इति उक्तवान् पिशाचः।

अलसः उक्तवान् - ''प्रतिदिनं मया सह द्यूतक्रीडार्थम् एतौ ग्रामज्येष्ठकृषिकौ उभौ अपि यदि अत्रैव भवतः, तर्हि वरम्'' इति।

पिशाचः 'तथास्तु, तथास्तु' इति उक्तवान्।

एतस्मात् पुनः त्रयः अपि समुद्रतीरे एव स्थिताः अभवन्। पिशाचः अदृश्यः जातः।






(ट्रायनगरस्य राज्ञः वर्धनस्य पुत्रः मोहनः प्रतापनामकस्य ग्रीक्राजस्य पत्नीं भुवनसुन्दरीम् अपहृतवान्। भुवनसुन्दर्याः प्रतिप्राप्त्यर्थं ग्रीक्जनाः नौकया प्रयाणं कुर्वन्तः ट्रायनगरं प्राप्य ट्रायनगरस्य आक्रमणं कृतवन्तः। दश वर्षाणि यावत् निरन्तरं युद्धं प्राचलत्। अनन्तरं काष्ठाश्वस्य साहाय्येन ट्रायनगरं प्रविश्य ग्रीक्जनैः समग्रस्य ट्रायनगरस्य लुण्ठनं कृतम् इत्यादीन् विचारान् 'भुवनसुन्दरी' - नामिकायाः ग्रीक्पुराणकथायाः द्वारा ज्ञातवन्तः वयम्।

ट्रायनगरस्य उपरि आक्रमणं कृतवत्सु ग्रीक्वीरेषु अन्यतमः रूपधरः यदा युद्धार्थं सन्नद्धः आसीत्, तदा एव ज्योतिषिकैः उक्तम् आसीत् यत् - ट्रायनगरं प्रति प्रस्थितः रूपधरः विंशतिं वर्षाणि यावत् स्वदेशं न प्रत्यागमिष्यति इति। विंशतिवर्षेषु दश वर्षाणि ट्रायनगरस्य आक्रमणे एव व्यतीतानि अभवन्। तदनन्तरेषु दशसु वर्षेषु रूपधरेण विचित्राः अनुभवाः अनुभूताः। तस्य अनुभवैः युक्ता कथा एतस्याः सञ्चिकातः एव आरभ्यते।)

ट्रायनगरतः प्रस्थिताः रूपधरस्य नौकाः समुद्रे अभिमुखम् उत्पन्नस्य वायोः कारणात् उद्दिष्टं स्थानं न प्राप्तवत्यः। वस्तुतः ताभिः दक्षिणदिशि गन्तव्यम् आसीत्। किन्तु वायोः आनुकूल्याभावात् ताभिः उत्तरदिशि गत्वा इस्मोरोस्तीरं प्राप्तम्। इस्मोरोस्तीरे किकोनिजनानां नगरम् अस्ति।

रूपधरस्य सैन्यं किकोनिनगरस्य उपरि आक्रमणं कृत्वा समग्रनगरस्य लुण्ठनम् अकरोत्। सैनिकाः किकोनिस्त्रीः, पशून्, तत्रत्यां सम्पत्तिं च विभज्य स्वीकृतवन्तः। अनन्तरं रूपधरः स्वसैनिकान् उक्तवान् - 'अस्माभिः यावच्छीघ्रम् इतः प्रस्थातव्यम्' इति।

किन्तु तदीयाः सैनिकाः तस्मिन् समये



एव प्रस्थानं न इष्टवन्तः। यतः तस्मिन् दिने विजयोत्सवम् आचरन्तः ते सैनिकाः चिन्तितवन्तः आसन् यत् - अद्य यथेच्छं सुरां पीत्वा पशूनां मांसेन विशेषभोजनं सज्जीकरणीयम् इति।

अत्रान्तरे नगरात् पलाय्य गताः किकोनिजनाः अन्यान् ग्रामान् गत्वा सहस्राधिकान् सैनिकान् आनीतवन्तः । आगतेषु बहवः साहसिनः वीराश्च आसन्। उषःकाले एव किकोनियोधाः समूहरूपेण आगत्य रूपधरसैन्यस्य उपरि आक्रमणं कृतवन्तः। घोरं युद्धं प्रवृत्तम्। किकोनिजनाः अधिकसंख्याकाः आसन् । किकोनियोधाः वीरावेशेन युद्धं कृतवन्तः । एतस्य परिणामतः रूपधरसैनिकानां संख्या न्यूना जाता । रूपधरसैनिकाः बहवः मृताः अभवन्। अवशिष्टाः केचन रूपधरसैनिकाः प्राणभीत्या स्वनौकाः आरुह्य ततः पलायनं कृतवन्तः।

एवं किकोनिनगरात् पलायिताः ग्रीकवीराः समुद्रे यदा किञ्चिद्दूरं गतवन्तः, तदा वायव्यदिक्तः झञ्झावातः आरब्धः । आकाशः मेघैः आवृतः अभवत्। तच्च दिनं दुर्दिनं जातम्। महता वेगेन वायुः वाति स्म इति कारणतः नौकाः शरवेगेन गच्छन्ति स्म । वायुजलयोः सम्मिश्रणात् पटमयानि अरित्राणि स्फीतानि जातानि। तेन नौकायाः वेगः नितरां प्रवृद्धः। ततः अल्पे एव काले अरित्रवस्त्राणि छिन्नानि अभवन् । तत्कारणतः नौका लक्ष्यविहीना जाता । एतत्सर्वं दृष्ट्वा - 'इतःपरम् अस्माकं प्राणरक्षणं कष्टकरम्' इति विचिन्त्य रूपधरः सैनिकान् आज्ञापितवान् - 'महता प्रयत्नेन चालन-दण्डसाहाय्येन एव नौकां तीरं नयन्तु' इति। सैनिकाः महता प्रयत्नेन नौकां तीरं नीतवन्तः । सर्वे मरणभयात् कम्पमानाः झञ्झावातस्य निर्गमनम् एव प्रतीक्षमाणाः स्थितवन्तः। दिनद्वयं तैः सूर्यः एव न दृष्टः। तृतीयदिने प्रातःकाले पूर्वदिशि सूर्योदयं दृष्ट्वा अतीव सन्तुष्टाः ग्रीकयोधाः पुनर्जन्म प्राप्तवन्तः इव महता सन्तोषेण नृत्यं कृतवन्तः । पुनरपि प्रयाणार्थं ते नौकाः सज्जीकृतवन्तः। अनन्तरं तेषां नौकाः विना विघ्नं वायुवेगेन गमनम् आरब्धवत्यः। चतुर्णां दिनानां प्रयाणस्य अनन्तरं रूपधरस्य नौकाः

'मलया-आग्रां' प्राप्तवत्यः। ततः उत्तरदिशि गम्यते चेत् रूपधरः स्वदेशम् इथाकां प्राप्तुं शक्नोति।

किञ्चित्कालानन्तरं वायुवेगः न्यूनः जातः। तदा रूपधरः नौकाचालकान् आज्ञापितवान् यत् - उत्तरदिशि गच्छन्तु इति। नौकाः प्रस्थिताः। तावति काले पुनः आरब्धः झञ्झावातः नौकाः 'कितीरा'तीरं प्रति वेगेन नीतवान्। नव दिनानि यावत् अहोरात्रं वायुदेवेन रूपधरनौकाः कन्दुकः इव परिक्षिप्ताः। दशमे दिने तैः किञ्चन तीरं प्राप्तम्। किन्तु रूपधरेण तस्मिन् तीरे अधिककालं न स्थितम्। यतः तत्प्रदेशीयाः जनाः किञ्चन फलं खादन्ति स्म। बीजरहितानि तानि फलानि मधुररुचियुक्तानि भवन्ति स्म। तेषां फलानां खादनेन पूर्वतनघटनाः विषयाः वा विस्मृताः भवन्ति स्म। तेषां फलानां खादनानन्तरं सुरापानं कृतवन्तः इव मनुष्याः भावनालोके एव विहरन्तः भवन्ति स्म। तत्रत्याः जनाः आदिनं तानि फलानि खादन्तः आनन्देन नृत्यन्ति स्म।

किन्तु एतं विचारं रूपधरः न जानाति स्म। रूपधरः, तस्य अनुचराः च समुद्रतीरे एव पाकं सज्जीकृत्य भोजनं कृतवन्तः। भोजनानन्तरं रूपधरः द्वित्रान् अनुचरान् समीपम् आहूय उक्तवान् - "एतत्प्रदेशीयाः जनाः कीदृशाः इति ज्ञात्वा आगच्छन्तु भवन्तः" इति।

रूपधरस्य आदेशानुसारं त्रयः ग्रीकयोधाः



तत्प्रदेशस्य जनानां दर्शनार्थं गतवन्तः। तत्रत्याः जनाः ग्रीकयोधानां क्लेशं न उत्पादितवन्तः, अपि तु ते ग्रीकयोधेभ्यः खादितुं फलं दत्तवन्तः। रूपधरस्य अनुचराः तानि फलानि खादन्तः, यदर्थम् गतं तत् कार्यम् एव विस्मृत्य आनन्देन भावनालोके विहरन्तः तत्रैव स्थितवन्तः। स्ववसतिस्थानं न प्रत्यागतवन्तः एव।

सुदीर्घः कालः अतीतः चेदपि यदा अनुचराः न प्रत्यागताः, तदा तान् अन्विष्यन् रूपधरः कैश्चित् सहचरैः सह गतवान्। वस्तुस्थितिं ज्ञातवान् सः। तत्रत्याः जनाः रूपधराय अपि खादितुं फलानि दत्तवन्तः। किन्तु रूपधरः परीक्षादृष्ट्या तानि फलानि दृष्टवान्। सन्देहम् अनुभवन् सः फलानि



खादितुं न इष्टवान्। ये त्रयः अनुचराः फलानि खादित्वा सन्तोषेण विहरन्तः आसन्, तान् बलात् नौकासमीपम् आनेतुम् उद्युक्तः रूपधरः। तदा ते उक्तवन्तः - "वयं भवता सह न आगमिष्यामः। अपि तु अत्रैव सन्तोषेण निवसामः वयम्" इति।

किन्तु रूपधरः तान् त्रीन् अपि बलात् रज्ज्वा बद्ध्वा नौकायाम् उपवेशितवान्। इतःपरं एतस्मिन् प्रदेशे स्थितिः अपायकारी इति विचिन्त्य सः ततः अग्रे गतवान्। तस्य अन्ये अनुचराः अपि तम् अनुसृतवन्तः। तदीयाः नौकाः कांश्चन मासान् यावत् समुद्रे एव प्रयाणं कुर्वत्यः कदाचित् रात्रिसमये कञ्चित् तीरप्रदेशं प्राप्तवत्यः। सः कः प्रदेशः इत्यपि ज्ञातुं न शक्यम् आसीत् ग्रीकजनैः। यतः यद्यपि आकाशे चन्द्रः आसीत्, तथापि आकाशः मेघैः आवृतः आसीत् इत्यतः किमपि सम्यक् दृष्टिगोचरं न भवति स्म। अपि च समुद्रस्य उपरिभागे हिमं धूमः इव भासते स्म। 'अग्रिमविषयं प्रातःकाले चिन्तयाम' इति विचिन्त्य ग्रीकजनाः समुद्रतीरस्य सिकतासु एव शयनं कृतवन्तः, गाढनिद्रां प्राप्तवन्तः च।

प्रातःकालानन्तरं ते शयनात् उत्थाय द्वीपसदृशं तं प्रदेशं पश्यन्तः तत्रत्य-प्रकृतिसौन्दर्यं पश्यन्तः च महान्तं सन्तोषम् अनुभूतवन्तः।

सः द्वीपः विविधैः फलैः समृद्धः आसीत्। तत्रत्या भूमिः अपि फलवती आसीत्। किन्तु कुत्रापि कृषिकार्यस्य चिह्नम् अपि न दृश्यते स्म। तस्मिन् प्रदेशे जलव्यवस्था अपि उत्तमा आसीत्। अतः तत्र परिश्रमेण कृषिकार्यकरणस्य आवश्यकता न आसीत्। क्षेत्रे स्वयम् एव धान्यानि वर्धन्ते स्म।

ग्रीकजनाः तस्य द्वीपस्य अरण्यप्रदेशे यदा किञ्चिद्दूरं गतवन्तः, तदा तैः केचन अजाः दृष्टाः। अजान् दृष्ट्वा अतीव सन्तुष्टाः ग्रीकजनाः पुनः स्वनौकास्थानं गत्वा धनुर्बाणादिकं स्वीकृत्य आगतवन्तः, बाणप्रयोगैः अजान् मारयित्वा, मारितान् अजान् पक्त्वा खादितवन्तः च। आदिनं ते पक्वम् अजमांसम् एव खादितवन्तः। तस्मिन् दिने तैः कुत्रापि न गतम्, अपि तु नौकास्थानसमीपे एव स्थितम्। सायङ्कालसमये तत्र जनानां

वासचिह्नानि दृष्टानि । गृहेभ्यः बहिः निर्गच्छन् धूमः दृष्टः तैः । अजानां मेषाणां च खुरशब्दाः श्रुताः ग्रीक्जनैः ।

अनन्तरदिने प्रातःकाले सूर्योदय-समनन्तरं रूपधरः स्वकीयान् अनुचरान् उत्थाप्य एवम् उक्तवान् - "एतस्य द्वीपस्य वासिनः नागरिकाः उत वनवासिनः इति ज्ञात्वा आगमिष्यामि अहम् । मम प्रत्यागमनानन्तरम् अग्रे किं करणीयम् इति चिन्तयाम । अत्रत्यानां जनानां दर्शनं कृत्वा मम आगमनसमये विलम्बः भवेत् कदाचित् । तथापि मम प्रत्यागमनपर्यन्तम् अपि भवन्तः सर्वे अत्रैव स्थित्वा नौकारक्षणं कुर्वन्तु । भवत्सु केनापि कुत्रापि न गन्तव्यं समूहं परित्यज्य" इति ।

सर्वे अपि रूपधरस्य वचनम् अङ्गीकृतवन्तः ।

अनन्तरं रूपधरः स्वनौकाम् आरुह्य तीरपार्श्वे एव अग्रे गतवान् । अनतिदूरे एव दक्षिणतीरे कस्मिंश्चित् उन्नतभूप्रदेशे काचित् गुहा दृष्टा रूपधरेण । गुहां परितः लताः प्रवृद्धाः आसन् । गुहां परितः रक्षणार्थं काचित् उन्नता भित्तिः अपि निर्मिता आसीत् । भित्तिसमीपे बृहदाकारिकाः शिलाः, महाकारकाणि वृक्षमूलानि च आसन् ।

रूपधरः स्वनौकां गुहायाः पुरतः संस्थाप्य स्वनाविकेषु उत्तमैः द्वादशवीरैः सह गुहां प्रति प्रस्थितः । प्रस्थानसमये अजचर्मनिर्मिते स्यूते विशिष्टं किञ्चन पानीयं स्वीकृत्य सः प्रस्थितः । तत् पानीयम् अत्यन्तं विशिष्टम् आसीत् । पूर्वं रूपधरेण यदा





इस्मोरस् उपरि आक्रमणं कृतम् आसीत्, तदा तत्रत्यं कञ्चित् अर्चकं, तस्य पत्नीं च न मारितवान् आसीत् अनुकम्पया । तस्य प्रतिफलरूपेण अर्चकः रूपधराय उपायनरूपेण सुरायुक्तान् चर्मस्यूतान् सुवर्णरजतादिकं च दत्तवान् आसीत् । सः अर्चकः तस्मिन् पानीये विंशतिगुणितं जलं योजयित्वा पिबति स्म । तथापि तस्य पानीयस्य माधुर्ये सुगन्धे वा न्यूनता न भवति स्म । अपि तु तत् पानीयम् अत्यन्तं रुचिकरं भवति स्म ।

रूपधरः अनुचरैः सह गुहां प्रविष्टवान् । किन्तु तस्यां गुहायां केऽपि न आसन् । अत्यन्तं विशालायां तस्यां गुहायां लघुलघुप्रकोष्ठाः निर्मिताः आसन् । तेषु प्रकोष्ठेषु मेषशिशवः अजशिशवः च आसन् । गुहायाः एकस्मिन् प्रकोष्ठे क्षीरमण्डेन निर्मितानि मधुरखाद्यानि आसन् । बहूनि पात्राणि क्षीरेण पूर्णानि आसन् ।

रूपधरस्य अनुचराः केचन स्वनायकम् उक्तवन्तः - 'क्षीरमण्डनिर्मितानि एतानि मधुरखाद्यानि स्वीकृत्य इतः गच्छाम वयम्' इति ।

अपरे केचन उक्तवन्तः - 'अत्र कोऽपि प्रष्टा नास्ति अस्माकम् । एतान् मेषशिशून् अजशिशून् च स्वीकृत्य इतः निर्गच्छाम' इति ।

किन्तु रूपधरः एतत् न अङ्गीकृतवान् । अनन्तरं सर्वेऽपि आकण्ठं मण्डनिर्मितं मधुरखाद्यं खादितवन्तः । अनन्तरं तस्याः गुहायाः स्वामिनः प्रतीक्षां कुर्वन्तः तत्रैव उपविष्टवन्तः । काश्चन घण्टाः अतीताः । गुहायाः स्वामी आगतवान् । प्रथमं तस्य स्वामिनः मुखदर्शनं न जातम् । अत्यन्तं प्रकाशमानं काष्ठमेकं गुहायाः द्वारात् अन्तः आगत्य पतितम् । अनन्तरं गुहायाः स्वामी शिरः अवनमय्य अन्तः आगतवान् । मार्जारस्य दर्शनात् भीताः मूषकाः इव ग्रीकजनाः भीत्या गुहायाः कोणेषु निलीय स्थितवन्तः ।

स्वामी गुहायाः अन्तः आगत्य पतितं काष्ठं हस्तेन गृहीत्वा मेषाणां समूहम् एकं गुहायाः अन्तः आनीतवान् । मेषाः अत्यन्तं दृढकायाः आसन् । मेषाणाम् अन्तः आगमनानन्तरं गुहायाः द्वारस्य अवरोध-

पूर्वकम् एकां महाशिलां स्थापितवान् गुहास्वामी। सा शिला सामान्यैः उन्नेतुं न शक्या एव। गुहास्वामिनः ललाटस्थम् एकम् एव नेत्रम् अग्निगोलः इव रक्तवर्णीयं सत् प्रकाशते स्म। दर्शनेन सः भयजनकः आसीत्।

अनन्तरं सः मेषीणां दोहनं कृतवान्। सः मनुष्यः भालनेत्रजातीयः आसीत्। एतादृशाः बहवः तस्मिन् द्वीपे आसन्। तेषां व्यवस्थितं समाजजीवनं न आसीत्। अन्यस्य कष्टसुखानि न जानन्ति स्म ते। एकैकः अपि एकैकस्यां गुहायां निवसति स्म। एतादृशाः भालनेत्रराक्षसाः अन्येषां विषये न चिन्तयन्ति स्म। कृषिकार्यम् अपि न कुर्वन्ति स्म ते। तत्रत्या भूमिः फलवती आसीत् इत्यतः तत्र कृषिकार्यं विना एव गोधूमादीनि धान्यानि स्वयं वर्धन्ते स्म।

एते भालनेत्रजातीयाः राक्षसाः वर्षे एकवारं धान्यानां सङ्ग्रहं कुर्वन्ति स्म। इतरेषु समयेषु हरितायमानां समृद्धां भूमिं प्रति अजमेषादीन् नीत्वा चारयन्ति स्म। तत्रत्यानि पुष्टियुतानि तृणानि खादित्वा ते पशवः दृढकायाः शक्तिमन्तः च भवन्ति स्म। प्रभूतं क्षीरम् अपि यच्छन्ति स्म। एवम् आदिनं सूर्यास्तं यावत् पशूनां चारणं विना अन्यत् किमपि कार्यं न आसीत् तेषाम्।

एते बहुभ्यः वर्षेभ्यः समुद्रतीरे एव निवसन्ति स्म। तथापि ते नौकानिर्माणम्, एकस्थानात् अपरस्थानं प्रति गमनं वा न जानन्ति स्म। अतः नागरिकतायाः परिचयः एव न आसीत् तेषाम्।

ग्रीकजनैः प्रविष्टायाः गुहायाः स्वामिना भालनेत्रराक्षसेन क्षीरस्य यत् दोहनं कृतम्, तस्य अर्धभागं स्वप्रसेवे स्थापितवान् सः। अवशिष्टं क्षीरं पानार्थं पात्रे स्थापितवान्। अनन्तरं सः अग्निं ज्वालितवान्। अग्निज्वालायाः प्रकाशे तेन ग्रीकजनाः दृष्टाः।

भयजनकः सः राक्षसः कुपितः सन् तीक्ष्णदृष्ट्या तान् ग्रीकजनान् पश्यन् उच्चस्वरेण पृष्टवान् - "भवन्तः के?" इति।

(अनुवर्तते)



# रसवार्ताः

## त्रिवलिपुत्राणां सामर्थ्यम्

केरलराज्यस्य एर्नाकुलप्रदेशे काचित् महिला त्रीन् पुत्रान् युगपत् प्रसूतवती, येषां पुत्राणां नाम महेशः, मनोजः, माया च इति। अस्मिन् वर्षे एते त्रयः अपि एस्.एस्.एल्.सि. परीक्षायां प्रथमश्रेणीं प्राप्तवन्तः सन्ति । तत्रापि महेशः मनोजः च विशेषश्रेण्याम् उत्तीर्णौ जातौ । एतेषां माता



'स्टाटिस्टिक्' उपन्यासिका, पिता च अकौण्ट्स् अधिकारी।

## अन्तरिक्षप्रयाणे अमेरिकादेशेन साधितः विक्रमः

अमेरिकादेशीयः व्योमगामी नार्मन्थागार्ड्वर्यः जून् ६ दिनाङ्के अन्तरिक्षवासस्य ८५ दिनानि यापयित्वा नूतनं विक्रमं साधितवान् अस्ति । ततोऽपि पूर्वं गतः अमेरिकादेशीयः कश्चित् व्योमगामी ८४ दिनानि, एकघण्टां, १६ निमेषान् च अन्तरिक्षे स्थितवान् आसीत् । अन्तरिक्षं ये गन्तुम् इच्छन्ति, तैः सर्वैः अपि तत्र रशियादेशेन निर्मिते 'मीर्' नामके अन्तरिक्षस्थानके एव अवतरणीयम् । नार्मन्थागार्ड्वर्यः तत्र जुलैमासपर्यन्तम् अपि स्थास्यति। अनन्तरम् अन्यः कश्चित् व्योमगामी तत्र गमिष्यति, नार्मन्थागार्ड्वर्यः भूमिम् आगमिष्यति।

अन्तरिक्षं प्रति यः कोऽपि गच्छतु नाम, तेन वालेरिपोलियोकोट्वर्येण साधितस्य विक्रमस्य अतिक्रमणं सर्वथा न शक्यते । यतः वालेरिवर्यः ४३९ दिनानि यावत् अन्तरिक्षे वासं कृत्वा गते मार्चमासे प्रत्यागतवान् अस्ति।

## दार्वाघाटपक्षिणः

तीक्ष्णया स्वचञ्च्वा वृक्षाणां काण्डभागं कर्तयित्वा कीटान् खादन्ति एते पक्षिणः । दारुणः आघातं कुर्वन्ति एते इत्यतः एव एते दार्वाघाटनाम्ना प्रसिद्धाः। एते पक्षिणः सामान्यतः अन्येषां पीडां न जनयन्ति । किन्तु सद्यःकाले एव अमेरिकादेशे द्वौ दार्वाघाटौ केन्नेडि अन्तरिक्षकेन्द्रस्थायाः व्योमनौकायाः इन्धनागारस्य आवरणं चञ्च्वा कर्तितवन्तौ । तौ उभौ दार्वाघाटौ १० से.मी. वैशाल्ययुक्तं रन्ध्रं कृतवन्तौ । एतस्मात् कारणात् तत्रत्याः अधिकारिणः व्योमनौकायाः प्रयोगं व्याक्षिप्तवन्तः इति श्रूयते। अनन्तरम् इन्धनागारस्य आवरणस्य परिशीलनेन ज्ञातं यत् - तौ पक्षिणौ 'लाश्व्प्याड्' मध्ये एव नीडं निर्मितवन्तौ इति।

## व्रणितः अतिमानवः

सचित्रविनोदकथापुस्तकेषु याः अतिमानव(सूपर्म्यान्)कथाः भवन्ति, ताः प्रायः सर्वैः बालैः पठ्यन्ते एव । बालाः ताः कथाः उत्साहेन पठन्ति । चलनचित्रेषु अतिमानवपात्रं कुर्वन् सः क्रिस्ट्फर्रीव्नामकः गतस्य मेमासस्य अन्तिमसप्ताहे प्रवृत्तेन अपघातेन व्रणितः अभवत् । अश्वस्य उपरि उपविश्य प्रयाणं कुर्वन् सः अकस्मात् अधः पतितवान् । तस्मात् शिरसि सः व्रणितः अभवत् । अपायात् रक्षितः सः केषुचित् एव दिनेषु पूर्णतः स्वस्थः भविष्यति इति वैद्याः उक्तवन्तः सन्ति।






# चन्द्रशेखरस्य कथा

जीवने कर्तव्यम् एव प्रधानं चिन्तयन् त्रिविक्रमः पुनरपि वृक्षसमीपं गतवान् । वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान् । मौनं श्मशानाभिमुखं प्रस्थितवान् च । तदा शवान्तर्गतः वेतालः अवदत् - "अये राजन् ! भीकरे अस्मिन् श्मशाने मध्यरात्रसमये उलूकश्रृगालादयः केवलम् अटन्ति, न तु मानवाः । किन्तु राजा भवान् उद्दिष्टं किमपि कार्यं मनसि निधाय, स्वसुखम् अपि परित्यज्य एतस्मिन् कार्ये प्रवृत्तः अस्ति । वस्तुतः राज्ञा सता भवता अस्मिन् समये अन्तःपुरे तल्पे सुखेन शयनं करणीयम् आसीत् । किन्तु तत् परित्यज्य भवान् अत्र श्मशाने महान्तं परिश्रमं वहन् अस्ति । अतः मयि सन्देहः उदेति यत् भवतः अहम्भावः अविवेकिता च अस्ति इति । सामान्यजनानां दृष्ट्या भवान् महापुरुषः स्यात् नाम कदाचित् । तादृशाः महापुरुषाः

## वेतालकथा



अपि कदाचित् अविवेकेन व्यवहरन्ति । एतस्य निदर्शनार्थं कस्यचित् कविराजस्य कथां श्रावयामि । श्रद्धया शृणोतु तावत् । कथाश्रवणेन भवतः मार्गायासः परिहृतः भविष्यति'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

पूर्वं कौशाम्बिदेशस्य कस्मिंश्चित् कुग्रामे चन्द्रशेखरनामकः युवकः आसीत् । सकलशास्त्रपारङ्गतः सः आशुकवितारचने अत्यन्तं प्रतिभावान् आसीत् ।

चन्द्रशेखरः कस्यचित् दरिद्रस्य पुत्रः आसीत् । तस्य कवितासामर्थ्यं ज्ञात्वा बहवः तम् उक्तवन्तः - ''भवान् कौशाम्बिराजस्य विजयभूपतेः समीपं गच्छतु, येन भवान् राजाश्रयं प्राप्तुं शक्नोति । तस्मात् भवतः अग्रिमजीवनम् अपि सुखमयं भविष्यति'' इति ।

कौशाम्बिदेशस्य कश्चन सम्प्रदायः अस्ति । तस्य देशस्य यः कोऽपि कविः भवतु, तेन सर्वप्रथमं समीपस्थः भूस्वामी आश्रयणीयः । भूस्वामिना सह कानिचन दिनानि वसेत् सः । अनन्तरं भूस्वामी एव तं कविं महाराजसमीपं नयेत् ।

परम्परागतम् एतं सम्प्रदायम् उल्लङ्घ्य राज्ञः समीपं गन्तुं न इच्छति चन्द्रशेखरः । अतः 'गृहात् अनतिदूरे स्थितस्य चक्रपुरस्य भूस्वामी वीरवर्धनः आश्रयणीयः' इति निश्चित्य सः शुभे मुहूर्ते चक्रपुरं प्रति प्रस्थितः ।

चन्द्रशेखरः यावत् वीरवर्धनस्य गृहं प्राप्तवान्, तावता तत्रत्या परिस्थितिः उत्तमा न आसीत् । तद्गृहसदस्याः सर्वे अपि अतीव दुःखिताः आसन् । एतत् दृष्ट्वा दिग्भ्रान्तः चन्द्रशेखरः 'किं प्रवृत्तम् ?' इति तत्रत्यान् पृष्टवान् ।

वस्तुस्थितिः एषा आसीत् - वीरवर्धनस्य एकमात्रपुत्र्याः शीलवत्याः विवाहः मासात् पूर्वं सम्पन्नः आसीत् । इतोऽपि पत्न्या सह श्वशुरगृहे एव आसीत् शीलवत्याः पतिः । तस्मिन् दिने उद्याने विहारसमये सर्पेण दष्टः सः मृतः आसीत् । एतस्मात् सर्वे दुःखिताः आसन् ।

एतस्मात् चन्द्रशेखरः चिन्तितवान् यत् - गृहतः प्रस्थिते मुहूर्ते एव शीलवत्याः पतिः मृतवान् इति । एतत् अशुभम् इति विचिन्त्य

क्षणम् अपि तत्र स्थातुम् अनिच्छन् सः ततः स्वग्रामं प्रति गतवान्।

चन्द्रशेखरस्य प्रत्यागमनात् खिन्नः तस्य पिता सप्ताहानन्तरं समीरपुरस्य भूस्वामिनः वल्लभरायसमीपं गमनार्थं स्नेहितद्वारा मुहूर्तनिश्चयं कृतवान्।

शुभे मुहूर्ते प्रस्थितः चन्द्रशेखरः समीरपुरं प्राप्य वल्लभरायस्य गृहं गतवान्। तत् गृहं प्राप्तवता चन्द्रशेखरेण ज्ञातं यत् - पूर्वस्मिन् दिने एव भूस्वामी वल्लभरायः तीव्रज्वरेण पीडितः अस्ति इति, वैद्याः अपि ज्वरस्य कारणं न ज्ञातवन्तः इति। तस्मात् सर्वेऽपि चिन्तामग्नाः सन्ति इति च।

द्वितीयवारम् अपि प्रयत्नः विफलः जातः इत्यतः चन्द्रशेखरः निराशया खिन्नः जातः। ततः सः स्वगृहं प्रति प्रस्थितः। मध्येमार्गं पिपासितः सः समीपस्थे तटाके जलं पीत्वा तटाकपार्श्वस्थस्य वटवृक्षस्य अधः शयनं कृतवान्। तेन एव मार्गेण गच्छन् अन्यः कश्चित् प्रयाणिकः जलं पातुम् इच्छन् तटाकं गतवान्, जलं पीतवान् च। चन्द्रशेखरः प्रयाणिकस्य आगमनं न लक्षितवान्। प्रयाणिकः जलं पीत्वा प्रतिगमनसमये चन्द्रशेखरं दृष्ट्वा तस्य मुखभावेन तस्य समस्या च अवगत्य चन्द्रशेखरम् उद्दिश्य पृष्टवान् - "स्वामिन्! 'भवान् कः' इति किम् अहं ज्ञातुं शक्नोमि ?" इति।

ध्वनिश्रवणात् जागरितः चन्द्रशेखरः उत्थाय निर्विकारभावेन उक्तवान् - "न तादृशः महापुरुषः अहम्। कश्चित् निर्भाग्यः



अहम्" इति।

एतत् श्रुत्वा आश्चर्यचकितः प्रयाणिकः सूक्ष्मदृष्ट्या शेखरम् अवलोकयन् - "भवान् देव्याः सरस्वत्याः मानसपुत्रः अस्ति। भवान् कदापि निर्भाग्यः न भविष्यति। यतः भवतः कान्तियुते नेत्रे एव सूचयतः यत् - भवति ब्रह्मतेजः अस्ति इति। अपि च विशालः भवतः ललाटः भवतः सौभाग्यं सूचयति। दीर्घौ बाहू इन्द्रधनुसदृशं भ्रूद्वयं च सूचयन्ति यत् - भवान् प्रकृतिपुरुषः इति। भवतः दक्षिणहस्तं दर्शयतु" इति वदन् चन्द्रशेखरस्य पार्श्वे एव उपविष्टवान्।

चन्द्रशेखरः स्वदक्षिणहस्तं दर्शितवान्। तस्य हस्ते विद्यमानाः रेखाः सूक्ष्मं परिशीलयन् प्रयाणिकः - "मासत्रयं यावत्



भवान् प्रयाणं मा करोतु । कुत्रापि मा गच्छतु । आगामिमाघशुद्धपञ्चम्यां भवतः ग्रामस्य उत्तरदिशि प्रयाणं करोतु । प्रथमं यस्य भूस्वामिनः गृहं लभ्यते, तम् आश्रित्य तिष्ठतु भवान् । सर्वं शुभकरं भविष्यति'' इति उक्त्वा ततः निर्गतवान् ।

एतस्याः घटनातः अतीव आश्चर्यचकितः चन्द्रशेखरः प्रयाणिकेन उक्तं भविष्यम् एव चिन्तयन् गृहं प्रति प्रस्थितः ।

चन्द्रशेखरस्य ग्रामस्य उत्तरदिशि अनतिदूरे भूस्वामी नरसिंहवर्मा निवसति । नरसिंहवर्मा वयसा ज्येष्ठः । बहुभ्यः वर्षेभ्यः पूर्वं कदाचित् तस्य प्रदेशः यदा क्षामपीडितः अभवत्, तदा स्वकीयां समग्रां सम्पत्तिं विक्रीय तत्प्रदेशस्य सर्वेषां जनानां प्राणान् रक्षितवान् आसीत् विनयशीलः भूस्वामी नरसिंहवर्मा । तस्य पञ्च पत्न्यः आसन् । तस्य अविवेकिताः सुप्रसिद्धाः आसन् । सः कवीनां कृतिः शृणोति इत्येतत् सत्यम् एव चेदपि सर्वेषु आदरं प्रकटयति इति न । प्रतिभायाः अवगमने रसग्रहणे च तस्य सामर्थ्यं न आसीत् । अतः उत्तमाः अपि बहवः कवयः ततः ताम्बूलमात्रं प्राप्य धनं किञ्चिदपि अप्राप्य निराशया प्रत्यागताः आसन् । एतदतिरित्य नरसिंहवर्मा नीरसाः कविताः रचयित्वा श्रावयति स्म । ताः नीरसाः अपि कविताः सहनया श्रुत्वा आश्रितकविना सन्तोषः प्रकटनीयः भवति स्म । एतत्सर्वं जानाति स्म चन्द्रशेखरः ।

गृहं प्रति गमनानन्तरं चन्द्रशेखरः प्रयाणिकेन उक्तं भविष्यं पितरं निवेदितवान् । मासत्रयानन्तरं चन्द्रशेखरः प्रयाणिकेन सूचिते मुहूर्ते नरसिंहवर्मणः गृहं प्रति प्रस्थितः ।

चन्द्रशेखरस्य आगमनोद्देशं ज्ञात्वा नरसिंहवर्मणः सेवकः उक्तवान् - " अद्य भूस्वामिनः पितुः पुण्यतिथिः अस्ति । अतः सः अन्तः कार्येषु मग्नः अस्ति । अद्य सायङ्कालपर्यन्तम् अपि सः वार्तालापार्थं न मिलति'' इति ।

सेवकस्य एतत् वचनं श्रुत्वा चन्द्रशेखरः यद्यपि खिन्नः, तथापि कथञ्चित् दर्शनं प्राप्य एव गन्तव्यम् इति निश्चित्य सः सेवकम् - ''भवतु । अहं सायङ्कालपर्यन्तम् अपि अत्रैव उपविश्य प्रतीक्षां करोमि । किन्तु सायङ्काले

कृपया तस्य दर्शनम् अवश्यं कारयतु'' इति सविनयं प्रार्थितवान्।

चन्द्रशेखरस्य दीनस्थितिं, तदीयं मुखतेजः च दृष्ट्वा 'एषः कश्चित् पण्डितः स्यात् एव' इति विचिन्त्य तम् उक्तवान् - 'सायङ्काले अवश्यं भूस्वामिनः दर्शनं कारयिष्यामि' इति। अनन्तरं सः सेवकः अतिथिगृहे चन्द्रशेखरस्य भोजनव्यवस्थां कृतवान्।

सायङ्कालः जातः। किन्तु भूस्वामिनः दर्शनं तु न जातम् एव। सर्वत्र अन्धकारः प्रसरन् आसीत्। तदा सेवकः चन्द्रशेखरसमीपम् आगत्य - ''स्वामिन्! भवतः आगमनविषयम् अहं भूस्वामिनं निवेदितवान् अस्मि। अद्य भूस्वामिनः पितुः श्राद्धं खलु! 'मम पिता कविताप्रियः आसीत्। पितुः पुण्यतिथिदिने यः कविः आश्रयम् इच्छन् आगतवान्, सः पण्डितः न चेदपि अस्माभिः पूजनीयः एव। अद्य आरभ्य सः अस्माकम् आस्थानकविषु अन्यतमत्वेन तिष्ठतु। तस्मै षोडशशतं कौशेयवेष्टीः उपायनरूपेण दत्त्वा अश्वं च दत्त्वा गौरवपूर्वकं तस्य प्रतिप्रयाणव्यवस्थां करोतु' इति माम् आज्ञापितवान् अस्ति भूस्वामी। श्वः आरभ्य भवता प्रतिदिनम् अत्र आगत्य भवतः कवितामाधुर्येण सभ्याः तोषणीयाः। एषा भूस्वामिनः आज्ञा। सर्वविधव्यवस्था करणीया आसीत् इत्यतः किञ्चित् विलम्बः जातः। स्वीकरोतु कृपया एताः वेष्टीः। भवतः प्रतिप्रयाणार्थं बहिः अश्वः सिद्धः



अस्ति'' इति उक्तवान्।

एतत् श्रुत्वा चन्द्रशेखरः दिग्भ्रान्तः। यतः एतत् सर्वं तेन न ऊहितम् आसीत्। पुनः किमपि प्रतिवक्तुम् अशक्तः सः भूस्वामिने कोटिप्रणामान् उक्त्वा निराशया एव अश्वम् आरुह्य प्रतिप्रस्थितः।

चन्द्रशेखरः एकं वर्षं यावत् नरसिंहवर्मणः आस्थानकवित्वेन स्थितवान्। वृद्धस्य नरसिंहवर्मणः आस्थाने अल्पज्ञानिनः कवयः केवलं धनार्थं तम् आश्रित्य जीवन्ति स्म। तत्र चन्द्रशेखरस्य किञ्चिदपि मनश्शान्तिः न आसीत्। एतस्मात् कारणात् दिनेषु अतीतेषु चन्द्रशेखरस्य निरुत्साहः वर्धमानः एव आसीत्।

एवं स्थिते कदाचित् शकटचालकः न



आगतः इत्यतः चन्द्रशेखरः पादाभ्याम् एव पद्मनाभपुरं प्रति प्रस्थितः। ग्रीष्मकाल-कारणतः पिपासितः सः जलपानार्थं समीपस्थस्य तटाकस्य समीपं गतवान्। तटाकतीरस्थस्य वृक्षस्य अधोभागे उष्णीषधारी कश्चित् प्रयाणिकः विश्रान्त्यर्थम् उपविष्टवान् आसीत्। अनतिदूरे एव कश्चित् उत्तमजातीयः अश्वः चरन् आसीत्।

जलं पीत्वा प्रत्यागच्छन्तं चन्द्रशेखरं दृष्ट्वा सः प्रयाणिकः मन्दहासं प्रकटितवान्। चन्द्रशेखरः अपि प्रत्युत्तररूपेण मन्दहासं प्रकट्य तस्य समीपे एव उपविष्टवान्।

"स्वामिन्! भवान् कः इति किम् अहं ज्ञातुं शक्नोमि?" इति मन्दहासपूर्वकं पृष्टवान् प्रयाणिकः।

एतत् श्रुत्वा चन्द्रशेखरः - 'पूर्वं कदाचित् केनचित् प्रयाणिकेन एवमेव प्रश्नः कृतः आसीत्। तदा मया उत्तरितम् आसीत् - 'अहं कश्चित् निर्भाग्यः' इति। अनन्तरं तेन प्रयाणिकेन भविष्यम् उक्तम् आसीत्' इति पूर्वं प्रवृत्तं स्मरन् सः उक्तवान् - "अहं कश्चित् मनुष्यः। अदृष्टदेवता मम माता। दुरदृष्टदेवः मम पिता" इति।

तदा प्रयाणिकः आश्चर्येण - "कः अर्थः भवतः कथनस्य?" इति पृष्टवान्।

"मां कृपया क्षाम्यतु। किमपि चिन्तयता मया असम्बद्धं प्रलपितम्। इदानीं भवतः प्रश्नस्य उत्तररूपेण एकां कवितां श्रावयामि। शृणोतु तावत्" इति उक्त्वा चन्द्रशेखरः भावपूर्णां कविताम् एकां श्रावितवान्।

तस्याः कवितायाः भावार्थः एषः - "पूर्णिमादिने उद्यानस्थानि पुष्पाणि सौगन्ध्यं प्रसारयन्ति। तस्मात् सौगन्ध्यात् आकृष्टाः भ्रमराः पुष्पस्थं मकरन्दं सन्तोषेण पिबन्ति। तस्मिन् समये त्रिलोकसुन्दरी काचित् तरुणी म्लानवदना सती उपविष्टवती अस्ति। तरुण्याः दुःखं ज्ञात्वा पुष्पाणि तां पृच्छन्ति - "वयं तु एकदिनाभ्यन्तरे एव म्लानतां प्राप्नुमः। तथापि वयम् अस्मिन् आह्लादजनके वातावरणे सन्तोषेण भवामः। भवती तु बहूनि वर्षाणि जीवति। तादृश्याः अपि भवत्याः मुखं म्लानम् अस्ति खलु! किं कारणम्?" इति। तदा सा तरुणी वदति - "आम्! भवतां वचनं युक्तम् एव। किन्तु मां

परितः ये भ्रमराः सन्ति, ते मां न तोषयन्ति, अपि तु कण्टकसदृशाः ते मां सदा पीडयन्ति'' इति।

कवितां श्रावयित्वा चन्द्रशेखरः प्रयाणिकम् उद्दिश्य - ''कवितायां या तरुणी अस्ति, सा मम अन्तरात्मनः कविता। तस्याः कवितायाः आराधकः निर्भाग्यः अहम्। किन्तु मम कुटुम्बं पोषयन् अहं भाग्यवान्। एतद्विषये कृपया अन्यत् किमपि मा पृच्छतु कृपया। इदानीम् एव अतीव श्रान्तः अस्मि अहम्'' इति उक्त्वा तं प्रयाणिकं नमस्कृत्य ततः निर्गतवान्।

सप्ताहः अतीतः। कदाचित् प्रातःकालसमये चन्द्रशेखरस्य गृहस्य पुरतः राजमुद्रायुक्तः अश्वशकटः कश्चित् आगतः। तेन शकटेन आगतौ द्वौ भटौ चन्द्रशेखरेण मिलित्वा 'सत्कारपूर्वकं भवान् आनेतव्यः इति महाराजः विजयभूपतिः उक्तवान् अस्ति' इति उक्त्वा आज्ञापत्रं प्रदर्शितवन्तौ।

एतस्मात् चन्द्रशेखरः ऊहितवान् यत् - सप्ताहात् पूर्वं तटाकतीरे मिलितवान् प्रयाणिकः महाराजः एव इति।

चन्द्रशेखरः भटाभ्यां सह राजभवनं गतवान्। महाराजः स्नेहभावेन चन्द्रशेखरम् आलिङ्ग्य उक्तवान् - ''कविवर्य! अद्य आरभ्य प्रतिदिनम् अपि भवान् स्वकवितामाधुर्येण अस्मान् सन्तोषयतु'' इति।

एतत् श्रुत्वा चन्द्रशेखरः सविनयम् उक्तवान् - ''भवतः आस्थाने स्थितिः इति



यत् तत् महतः सन्तोषस्य विषयः। अहं भाग्यवान्। किन्तु मम किञ्चित् निवेदनम् अस्ति - 'अहं नरसिंहवर्मणः आस्थानकविः अस्मि। अतः तस्य अनुमतिं प्राप्य एव मया अत्र आगन्तव्यम् इति'' इति।

महाराजस्य वैभवपूर्णेन सत्कारेण अतीव सन्तुष्टस्य चन्द्रशेखरस्य नेत्रे अश्रुपूर्णे जाते।

अनन्तरं महाराजः विजयभूपतिः उक्तवान् - ''कविताचातुर्येण सह भवतः संस्कारः विनयशीलता च तस्मिन् दिने एव मया अवलोकिते। भवतः इच्छानुसारं नरसिंहवर्मणः अनुमतिं प्राप्य एव आगच्छतु'' इति।

वेतालः एवं कथां समाप्य अवदत् - ''राजन्! उत्तमस्य प्रतिभावतः च कवेः

चन्द्रशेखरस्य उत्तमं जीवनं कल्पयितुम् इष्टवान् महाराजः विजयभूपतिः । नरसिंहवर्मणः समीपे तु चन्द्रशेखरस्य जीवनं कण्टकावृतं पाटलपुष्पम् इव आसीत् । अतः उत्तमजीवनदात्रे महाराजाय विजयभूपतये चन्द्रशेखरेण कृतज्ञताः समर्पणीयाः आसन् । किन्तु चन्द्रशेखरस्य व्यवहारः तद्विरुद्धः आसीत् । एषः व्यवहारः चन्द्रशेखरस्य अविवेकितां मूर्खतां च द्योतयति खलु ! अपि च एतादृशम् अविवेकिनं मूर्खं च चन्द्रशेखरं विजयभूपतिः विनयशीलः संस्कारवान् इति च प्रशंसितवान् इति यत् तदपि न्याययुतम् इति न भाति खलु ! एतेषां सन्देहानां समाधानं जानन् अपि यदि भवान् न वदेत्, तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः उक्तवान् - ''मनुष्यस्य कलायाः अपेक्षया अपि प्रधानम् आहारः । नरसिंहवर्मा चन्द्रशेखरकुटुम्बस्य अन्नदाता । अन्नदाता नाम प्राणदाता एव । अरसिककविताकथनं नरसिंहवर्मणः स्वभावः । यदि तद्विषये प्रस्तावः क्रियते, तर्हि दोषदर्शनं कृतं भवति । तादृशः दोषदर्शनयुतः नीचसंस्कारः चन्द्रशेखरस्य नास्ति । अतः एव सः स्वमानसिकवेदनां कविताद्वारा प्रकटीकृतवान् । किन्तु नरसिंहवर्मणः गौरवं सदा रक्षितवान् चन्द्रशेखरः । एतत् सर्वं ज्ञात्वा एव विजयभूपतिः 'विनयशीलस्य भवतः उत्तमसंस्कारः अस्ति' इति तस्य प्रशंसां कृतवान् । एषा प्रशंसा महाराजस्य सौजन्यं द्योतयति । महाराजस्य विजयभूपतेः स्नेहपूर्णेन सत्कारेण चन्द्रशेखरः यान् अश्रुबिन्दून् स्रावितवान्, ते एव चन्द्रशेखरेण अर्पिताः कृतज्ञताः । तानि एव प्रशंसावचनानि । अतः चन्द्रशेखरः विजयभूपतिः च उभौ अपि विवेकिनौ बुद्धिमन्तौ च, न तु मूर्खौ अविवेकिनौ वा'' इति ।

एवं राज्ञः यदा मौनभङ्गः जातः तदा शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।



# शिवाजिदुर्गाणि

रचना - मीरा उग्रा
चित्राणि - अरित्रा

अस्माकं देशे नैर्ऋत्यभागे विद्यमानानां दुर्गाणां, महाराष्ट्रनायकस्य महाराजस्य शिवाजेः जीवनस्य, तस्य कालस्य च महान् सम्बन्धः अस्ति ।

शिवाजिः शातवाहनानां 'शिवनेर्'नामके प्राचीनदुर्गे १६३० तमे वर्षे फेब्रवरीमासस्य १९ दिनाङ्के जन्म प्राप्तवान् ।

शिवाजिवर्येण प्रथमं स्वायत्तीकृतं दुर्गं 'तोर्ना' नामकम् । तोर्नादुर्गं सः १६४६ तमे वर्षे रक्तपातं विना स्वायत्तीकृतवान् । तदा वृष्टिकालः आसीत् इत्यतः बिजापुररक्षणसैन्यानि दुर्गरक्षणार्थं न आसन् । तस्मिन् दुर्गे रहस्यनिधिः आसीत् । तत् ज्ञात्वा शिवाजिः खननं कृत्वा निधिं स्वीकृतवान्, तस्मात् दुर्गात् नव कि.मी. दूरे 'राजगढ'नामकस्य नूतनदुर्गस्य निर्माणार्थं निधेः धनस्य उपयोगं कृतवान् च ।

'राजगढ'दुर्गे एव निवसन् शिवाजिः विंशतिं वर्षाणि यावत् तोर्नादुर्गम् अपि पालितवान् ।

यद्यपि शिवाजिः १६४७ तमे वर्षे 'कोण्डाना'नामकं दुर्गं स्वाधीनीकृतवान्, तथापि 'पुरन्दर'सन्ध्यनुगुणं तत् दुर्गं मोगलजनेभ्यः दत्तवान् ।



तोर्नादुर्गम्

राजगढदुर्गम्

'कोण्डाना' दुर्गं पुनरपि स्वायत्तीकर्तुं १६७० तमवर्षस्य फेब्रवरीमासे तानाजिवर्यस्य नायकत्वे, तस्य अनुजं सूर्याजीवर्यं ६०० मवालीसैनिकैः सह प्रेषितवान् शिवाजिः । दुर्गस्य पश्चिमदिशि उन्नता या ऋजुभित्तिः आसीत्, तस्याः भित्तेः आरोहणार्थं तानाजिवर्यः यशवन्तीनामिकायाः गोधायाः साहाय्यं स्वीकृतवान् आसीत् इति कथा श्रूयते ।

तानाजिवर्यः काञ्चित् दीर्घां रज्जुं गोधायाः शरीरे बद्ध्वा, तां गोधां दुर्गभित्तौ त्यक्तवान् । गोधा भित्तिम् आरुह्य भित्तेः अग्रभागं यदा प्राप्तवती, तदा तानाजिसैनिकः कश्चित् रज्जुं गृहीत्वा उपरि आरूढवान्, रज्ज्वाः अपरं भागम् उपरि बद्धवान् च । अनन्तरं रज्जुद्वारा आरुह्य तानाजिवर्यः, तदीयाः ३०० सैनिकाः च दुर्गस्य शिखरं प्राप्तवन्तः, तच्च दुर्गं स्वायत्तीकृतवन्तः । एतस्मात् शत्रुपक्षीयाः सहस्राधिकाः मृताः अभवन् । तानाजिवर्यः अपि मरणं प्राप्तवान् । एतां वार्तां श्रुत्वा शिवाजिः अतीव सन्तापम् अनुभवन् उक्तवान् - 'दुर्गं स्वाधीनम् अभवत् । किन्तु सिंहसदृशः वीरः दिवङ्गतः' इति । एतस्मात् कारणात् 'कोण्डाना' दुर्गं 'सिंहगढ' इति




नाम प्राप्नोत् । शिवाजेः राज्यस्य विस्तारः अधिकः जातः इत्यतः सः स्वराजधानीं विशालां कर्तुम् इष्टवान् । तदर्थं सः 'रैरी' नामकं दुर्गं चितवान् । विशाले पर्वतप्रदेशे १२ शतके निर्मितस्य प्राचीनस्य 'रैरीदुर्गस्य दैर्घ्यं २.४ कि.मी. वैशाल्यं च १.६ कि.मी. अस्ति । एतस्य दुर्गस्य 'रायगढ' इति नामकरणं कृतम् । अस्मिन् एव दुर्गे शिवाजेः पट्टाभिषेकोत्सवः महता वैभवेन सम्पन्नः ।

शिवाजिपट्टाभिषेकः

एतस्मिन् दुर्गे शत्रुभिः अभेद्यानि स्थानानि कानि सन्ति इति ज्ञातुम् इच्छन् शिवाजिः राज्ये किञ्चन प्रकटनं कारितवान् यत् - यस्याः कस्याश्चित् दिशातः एतत् दुर्गं यः रहस्येन प्रविशति, तस्मै पारितोषिकं दास्यामि इति । एतत् प्रकटनं श्रुत्वा महद्ग्रामनिवासी युवकः कश्चित् दुर्गं प्रविश्य विजयं साधितवान् । सः युवकः येन गुप्तमार्गेण दुर्गं प्रविष्टवान् आसीत्, तस्य मार्गस्य अवरोधपूर्वकं तत्र एकं द्वारं निर्मितम् । तत् द्वारं 'चोरदर्वाजा' इति इदानीम् अपि ख्यातम् अस्ति ।

'हिराकनी' नामिका महिला क्षीरविक्रयणार्थम् एतत् दुर्गम् आगच्छति स्म । सायङ्काले गृहं प्रतिगच्छति स्म सा । कदाचित् सायङ्काले दुर्गस्य मुख्यद्वारस्य पिधानसमयः अतीतः इति कारणतः रक्षकभटाः दुर्गद्वारस्य पिधानं कृतवन्तः । अतः क्षीरविक्रयिका हिराकनी दुर्गात् बहिः गन्तुं न शक्तवती । किन्तु गृहे तस्याः शिशुः एकाकी आसीत् इत्यतः तया कथञ्चित् गृहं प्राप्तव्यम् आसीत् । अतः सा दुर्गात् बहिः गन्तुं मार्गम् अन्विष्यन्ती दुर्गभित्तिम् आरुह्य, अन्धकारे एव ततः अवतीर्य स्वगृहं गतवती । सा यतः अवतरणं कृतवती, तत्र शिवाजिः 'हीरागोपुर' नामकं किञ्चन गोपुरं निर्मितवान् अस्ति । 'रायगढ' नामके दुर्गे एव शिवाजेः स्मारकम् अस्ति । तस्य स्मारकस्य पुरतः एव तदीयस्य 'वन्घ' नामकस्य शुनकस्य स्मारकम् अपि अस्ति । तस्य शुनकः स्वस्वामिनः शिवाजेः चितां प्रविष्टवान् इति प्रतीतिः अस्ति ।

हीराकनी-साहसम्


'रायगढ' दुर्गम्


शिवाजि-स्मारकम्



जञ्जीरादुर्गम्

शिवाजिः यद्यपि पुनः प्रयत्नं कृतवान्, तथापि सः स्वजीवितकाले 'जञ्जीरा' नामकं दुर्गं स्वायत्तीकर्तुं न शक्तवान् । कस्यचित् द्वीपस्य मध्ये स्थितम् एतत् दुर्गं १५११ तमे वर्षे मालिक्-अम्बर्वर्येण निर्मितम् । पोर्चुगीसजनाः ब्रिटिष्जनाः चापि एतत् दुर्गं स्वायत्तीकर्तुं न शक्ताः ।

शिवाजिवर्येण निर्मितानां केषाञ्चित् जलदुर्गाणां निर्माणे 'जञ्जीरा' दुर्गं तस्य स्फूर्तिदायकम् आसीत् । शिवाजिः मल्वातीरे सिन्धुदुर्गं निर्मितवान् । तस्य दुर्गस्य निर्माणार्थं त्रयाणां वर्षाणां कालावकाशः आवश्यकः अभवत् । कोट्यधिकानि सुवर्णनाणकानि व्ययितानि अभवन् । सः दुर्गस्य निर्माणार्थं शतं पोर्चुगीस्कर्मकरान् नियोजितवान् । नौकानिर्माणार्थम् उपयुज्यमानं 'पद्मगढ' नामकं दुर्गम् अपि शिवाजिना एव निर्मितम् ।

जञ्जीरादुर्गस्य नैर्ऋत्यदिशि ५६ कि.मी. दूरे पुरातनं किञ्चन जलदुर्गम् आसीत् । शिवाजिः तत् जलदुर्गं स्वाधीनीकृत्य तस्य पुनर्निर्माणं कृतवान्, 'सुवर्णदुर्गम्' इति तस्य नामकरणं कृतवान् च ।

सुवर्णदुर्गे स्थित्वा एव शिवाजिः 'सिद्धि' जनानां व्यवहारान्, कार्याणि च परिशीलयति स्म ।

१६८० तमे वर्षे शिवाजिः दिवङ्गतः । मरणसमये २४० दुर्गाणि तस्य आधीन्ये आसन् इति श्रूयते ।

सुवर्णदुर्गम्






# इन्दुमत्याः परिणयः

भद्रावतीनगरस्य युवराजः धर्मपालः गुरुकुले विद्याभ्यासं समाप्य राजधानीं प्रत्यागतवान्। राजनीतिविषयस्य राज्यपरिपालनादिव्यवहारस्य च ज्ञाने धर्मपालस्य न तावती आसक्तिः। अपि तु अरण्यप्रदेशेषु नदीतीरेषु च विहारं कर्तुं, तेनैव आनन्दम् अनुभवितुं च इच्छति स्म सः। धर्मपालः ईषदिव शीघ्रकोपी, त्वराशीलः च।

राज्यपरिपालनादिव्यवहारे युवराजः धर्मपालः कथं नियोजनीयः, केन प्रकारेण तस्मिन् आसक्तिः उत्पादनीया इति बहुधा चिन्तितवान् राजा विजयेन्द्रः। एतादृशपरिस्थितौ एव कदाचित् राजा विजयेन्द्रः अकस्मात् केनचित् रोगेण पीडितः सन् दिवङ्गतः। एतस्मात् धर्मपालः विंशतितमे वयसि एव भद्रावतीनगरस्य राजा अभवत्।

महाराजपदवीप्राप्त्यनन्तरम् अपि धर्मपालस्य स्वभावे किञ्चिदपि परिवर्तनं न जातम्। सः यथापूर्वम् एकाकी मृगयार्थं गत्वा अरण्यप्रदेशेषु विहरति स्म। तथापि तस्य राज्ये अनुभवी मन्त्री, विश्वासार्हः देशभक्तः च सेनाधिपतिः वीरवर्मा च आस्ताम् इत्यतः राज्यपरिपालनं सुव्यवस्थितं प्रचलति स्म।

एवं सति कदाचित् धर्मपालः सूर्योदयसमये एव मृगयार्थं प्रस्थितः। अरण्ये बहुकालं यावत् मृगयां कुर्वन् सः मध्याह्नसमये अतीव पिपासितः। पिपासां निवारयितुम् इच्छन् सः जलान्वेषणं कृतवान्। कुत्रचित् वृक्षसमूहप्रदेशे स्थितः तटाकः तेन दृष्टः। धर्मपालः अश्वात् अवतीर्य तटाकस्थं जलं पीतवान्, अश्वम् अपि जलं पायितवान्। जलपानानन्तरम् अकस्मात् तटाकस्य अपरतीरप्रदेशं दृष्ट्वा धर्मपालः



अतीव आश्चर्यचकितः।

यतः तटाकस्य अपरस्मिन् पार्श्वे किञ्चन कुटीरम् आसीत् । कुटीरस्य पुरतः फलभरिताः वृक्षाः विविधपुष्पयुक्तानि सस्यानि च आसन्। अतीव रमणीयः आसीत् सः प्रदेशः। 'अरण्यस्य मध्यभागे किमर्थम् एतत् कुटीरं निर्मितं स्यात् ? कः अत्र वसेत् ?' इति ज्ञातुम् इच्छन् धर्मपालः कुटीरसमीपं गतवान्। तेन यदा कुटीरसमीपं गतं, तदा तेन किञ्चन दृश्यं दृष्टम्। किञ्चन पञ्जरं वृक्षे लम्बमानम् आसीत्। पञ्जरस्थाय शुकाय फलं यच्छन्ती आसीत् काचित् सुन्दरी।

राजानं धर्मपालं दृष्ट्वा पञ्जरस्थः शुकः उक्तवान् - 'अतिथेः स्वागतम्' इति।

शुकस्य वचनं श्रुत्वा सुन्दरी युवतिः परितः अवलोकितवती । तत्र तया धर्मपालः दृष्टः। तं दृष्ट्वा सा आश्चर्यचकिता अभवत् । धर्मपालः अपि आत्मानम् एव विस्मृत्य सौन्दर्यवतीं तां पश्यन् स्थितवान्।

क्षणकालानन्तरम् आत्मानं निगृह्य सा युवतिः धर्मपालम् उद्दिश्य - "महति आतपे एव आगतवान् अस्ति भवान्। क्षणं तिष्ठतु। पानार्थं जलम् आनेष्यामि" इति वदन्ती कुटीरस्य अन्तः गन्तुम् उद्युक्ता।

तदा धर्मपालः तां निवारयन् उक्तवान् - "इदानीं मया तटाकजलं पीत्वा एव आगतम्। तत् आस्तां तावत्। भवती का ? अस्मिन् अरण्ये किमर्थम् एकाकिनी निवसन्ती अस्ति भवती ? इतःपूर्वं मया बह्व्यः राजकुमार्यः दृष्टाः। किन्तु भवादृशी सौन्दर्यवती न कापि दृष्टा मया" इति।

धर्मपालस्य प्रशंसावचनानि श्रुत्वा सा युवतिः मन्दं विहस्य शिरः अवनमय्य उक्तवती - "मम नाम इन्दुमती। अहम् अत्र एकाकिनी नास्मि । मम बाल्ये एव माता दिवङ्गता । मातुः मरणानन्तरं पित्रा एव पोष्यमाणा आसम् अहम्। पञ्चभ्यः वर्षेभ्यः पूर्वं विषसर्पेण दष्टः मम पिता स्वमरणात् पूर्वं मां स्वस्य स्नेहितस्य अधीनां कृतवान् आसीत्। तदारभ्य मम पितुः स्नेहितः मां पोषयन् अस्ति। वृत्त्या सः व्याधः। आवाम् उभौ अपि अस्मिन् कुटीरे वसन्तौ स्वः। अहं किञ्चित् वैद्यकीयं जानामि। अस्मिन् प्रदेशे ये वनवासिनः निवसन्ति, तेभ्यः मूलिकाभिः

औषधं निर्माय दास्यामि अहम्'' इति।

तदा धर्मपालः स्वपरिचयं वक्तुम् इच्छन् - ''मम नाम धर्मपालः। अहम् एतस्य देशस्य राजा अस्मि'' इति उक्तवान् गर्वमिश्रितेन स्वरेण।

धर्मपालस्य वचनश्रवणात् अपि इन्दुमती किञ्चिदपि आश्चर्यं न प्रकटितवती। अपि तु सा सहजतया एव उक्तवती - ''आम्। भवतः दर्शनात् एव ऊहितं मया यत् भवान् राजा इति। इतःपूर्वं भवतः नाम श्रुतम् आसीत् मया। अद्य भवतः दर्शनम् अभवत्'' इति।

इन्दुमत्याः वचनं श्रुत्वा धर्मपालः किमपि वक्तुम् उद्युक्तः। तावता इन्दुमती कुटीरस्य अन्तः गन्तुम् इच्छन्ती उक्तवती - ''अहं क्षन्तव्या। सम्प्रति एतस्य प्रदेशस्य नायकः कश्चित् अनारोग्यपीडितः अस्ति। अतः इदानीं त्वरितं तस्य परीक्षां कृत्वा मया तस्य औषधोपचारः करणीयः अस्ति। अतः इदानीं मया गन्तव्यम्'' इति।

अनुक्षणं धर्मपालः एकं पदम् अग्रे स्थापयित्वा उक्तवान् - ''इन्दुमति! अस्मिन् अरण्ये मृगाणां मध्ये त्रिलोकसुन्दर्याः भवत्याः वासः, अत्रत्यानां वनवासिनाम् औषधकरणं वा उचितं न इति भाति। अतः भवती मया सह राजधानीम् आगच्छतु। अहं भवतीं परिणेतुम् इच्छामि, येन भवती महाराज्ञी सती सुखेन जीवितुं शक्नुयात्'' इति।

धर्मपालस्य वचनं श्रुत्वा अपि इन्दुमती किमपि उत्तरं न दत्तवती। अपि तु सा सकृत् तीक्ष्णदृष्ट्या धर्मपालं दृष्ट्वा कुटीरस्य अन्तः गन्तुम् उद्युक्ता। किन्तु तावता धर्मपालः





वेगेन अग्रे गत्वा कुटीरस्य अन्तः इन्दुमत्याः गमनं निवारयन् - 'राजाज्ञाम् उल्लङ्घयितुं कियत् धैर्यं भवत्याः इति वदन् तस्याः हस्तं गृहीत्वा बलात् ताम् अश्वसमीपं नीतवान्।

तदा इन्दुमती धर्मपालतः आत्मानं रक्षितुम् इच्छन्ती - 'भवान् मां मा स्पृशतु' इति तं वदन्ती उच्चैः आक्रोशं कृतवती। तथापि धर्मपालः तां न त्यक्तवान्, अपि तु ताम् अश्वस्य उपरि उपवेशयितुम् उद्युक्तः। तावता कुतश्चित् वेगेन आगतः बाणः धर्मपालस्य भुजस्पर्शम् अकरोत्। अपरक्षणे एव धर्मपालः 'हा' इति वदन् महतीं वेदनां च अनुभवन् इन्दुमतीं त्यक्तवान्। यस्मात् प्रदेशात् बाणः आगतः, तत्र दृष्टवती इन्दुमती। अनतिदूरे एव इन्दुमत्याः रक्षकः स्थितवान् आसीत्। तेन एव बाणप्रयोगः कृतः आसीत्। एतत् ज्ञात्वा इन्दुमत्याः मुखं कोपेन रक्तवर्णं जातम्।

अनन्तरम् इन्दुमती धर्मपालं कुटीरस्य अन्तः नीत्वा तं मञ्चे उपवेशितवती। तस्य भुजे लग्नं बाणं निष्कास्य व्रणं केनचित् औषधेन लेपयित्वा तत् स्थलं वस्त्रेण बद्धवती।

तावता इन्दुमत्याः अङ्गरक्षकः कुटीरस्य अन्तः आगच्छन् - "कुत्र सः राजाधमः ? कियान् अहम्भावः तस्य ?" इति पृष्टवान् कोपेन।

एतत् श्रुत्वा धर्मपालः रक्षकं दृष्ट्वा - "कृपया क्षाम्यतु माम्। मया अपराधः कृतः। अद्य मया महती अविवेकिता आचरिता" इति उक्तवान्।

एतस्मात् उत्तरात् इन्दुमत्याः रक्षकस्य कोपः किञ्चिदिव शान्तः। सः परीक्षादृष्ट्या इन्दुमतिं दृष्टवान्। तदा इन्दुमती हस्तसङ्केतेन तं बहिर्गन्तुं सूचितवती। रक्षकः ततः बहिः गतवान्।

किञ्चित्कालानन्तरं धर्मपालः मौनं कुटीरात् बहिः आगत्य स्वकीयम् अश्वम् आरुह्य ततः राजधानीं गतवान्।

सप्ताहः अतीतः। धर्मपालस्य मन्त्री राजधानीतः सपरिवारम् इन्दुमत्याः कुटीरम् आगतवान्। सः मूल्ययुतानि कानिचन आभरणानि इन्दुमत्यै यच्छन् उक्तवान् - "भगिनि ! एतानि आभरणानि महाराजः धर्मपालः भवत्यै स्नेहपूर्वकं

प्रेषितवान् अस्ति। बाल्यात् अपि महाराजस्य स्वभावः किञ्चिदिव कोपयुक्तः। सप्ताहात् पूर्वं धर्मपालस्य व्यवहारेण अत्र या घटना प्रवृत्ता, तस्याः घटनातः तस्मिन् महत् परिवर्तनं जातम् अस्ति। आत्मना कृतस्य अपराधस्य प्रायश्चित्तरूपेण सः प्रतिज्ञां कृतवान् अस्ति यत् - इतःपरं जीवने कदापि विवाहविषये चिन्तनम् अपि न करिष्यामि इति'' इति।

मन्त्रिणः एतानि वचनानि श्रुतवत्याः इन्दुमत्याः नेत्रे अश्रुपूर्णे जाते। सा अश्रूणि मार्जयन्ती मन्त्रिणः पार्श्वे एव स्थितं स्वरक्षकम् उक्तवती - ''तात ! भवता महाराजः धर्मपालः सूचनीयः यत् - आगामिश्रावणमासे अत्र आगत्य अहं परिणेतव्या, राजधानीं नेतव्या च इति' इति''।

श्रावणमासः सम्प्राप्तः । इन्दुमती-धर्मपालयोः विवाहः सवैभवं सम्पन्नः।

विवाहानन्तरम् इन्दुमती कदाचित् सायङ्कालसमये पत्या सह अन्तःपुरे उपविश्य वार्तालापं कुर्वती आसीत्। तदा सा सम्भाषणमध्ये उक्तवती - ''महाराज ! भवतः प्रतिज्ञाभङ्गः कारितः मया'' इति।

तदा धर्मपालः हसन् - ''आम् ! भवत्या प्रतिज्ञाभङ्गः कारितः इति तु सत्यम्। किन्तु भवत्या किं कृतम् ? प्रथमं मां तिरस्कृतवती अपि भवती पुनः किमर्थं मया सह विवाहम् अङ्गीकृतवती ?'' इति पृष्टवान्।

धर्मपालस्य वचनं श्रुत्वा इन्दुमती मन्दहासपूर्वकम् उक्तवती - ''मां क्षाम्यतु कृपया। प्रथमं मया तिरस्कृतः न भवान्, अपि तु भवति विद्यमाना अविवेकिता, अहङ्कारः च। किन्तु उपायनैः सह मम कुटीरम् आगतस्य मन्त्रिणः द्वारा अहं ज्ञातवती, 'भवता प्रतिज्ञा कृता अस्ति' इति। तस्मात् 'भवति महत् परिवर्तनं जातम् अस्ति। भवान् मयि नितराम् अनुरागवान् अस्ति' इति ऊहितं मया। अतः अहं भवतः परिणयम् अङ्गीकृतवती'' इति।

इन्दुमत्याः एतत् वचनं श्रुत्वा धर्मपालः अतीव सन्तुष्टः।





# सन्देहनिवारणम्

अमरावतीनामकस्य देशस्य राजा देवशर्मा राज्यपरिपालने दक्षः, स्फूर्तिमान् कलोपासकः च। राज्ये स्थितान् सर्वान् कलाकारान् सम्मानयति स्म सः। तथैव अन्यान्यकलासु निपुणेभ्यः जनेभ्यः आश्रयदानेन स्वस्य कलाविषयकम् अभिमानं सप्रमाणं निरूपयति स्म च।

कदाचित् देवशर्मा पट्टमहिष्या निर्मलादेव्या सह उद्याने विहरति स्म। तस्मिन् समये आस्थानस्य प्रमुखः कविः रामदेवः तत्र आगतवान्। सद्यः एव देवशर्मा कश्चित् उत्सवं वैभवेन आचरितुं चिन्तयन् आसीत्। तस्मिन् उत्सवे सर्वविध-कलाकाराणां सम्मेलनं कृत्वा प्रतिभाशालिनां सम्माननं करणीयम् इति चिन्तितम् आसीत् तेन। उत्सवस्य सन्नाहविषये राज्ञा सह चर्चयितुं रामदेवः तत्र आगतवान् आसीत्।

तयोः सम्भाषणं श्रद्धया श्रुतवती निर्मलादेवी राजानम् उद्दिश्य - "एतस्य सम्मेलनस्य निमित्तं भवन्तौ प्रजानां धनस्य दुर्विनियोगं कुर्वन्तौ स्तः इति मे भाति। यतः मनुष्यमात्रस्य अत्यन्तम् आवश्यकं साधनम् आहारः। ततः आरोग्यं, वासार्थम् आश्रयस्थानं च आवश्यकम्। प्रजाभ्यः तानि व्यवस्थापयितुं प्रयत्नः भवतु भवतोः" इति उक्तवती।

एतत् श्रुत्वा रामदेवस्य मुखं विवर्णं जातम्। देवशर्मणः अपि खेदः अभवत्। तदा रामदेवः किमपि अकथयन् विनयेन राजानं नमस्कृत्य ततः निर्गतवान्।

क्षणकालानन्तरं देवशर्मा प्रसन्नचित्तः सन् राज्ञीं पश्यन् - "देवि! भगवतः कृपया अस्माकं सर्वाः प्रजाः केनचिदपि कष्टेन पीडिताः न सन्ति" इति उक्त्वा ललितकलानां वैशिष्ट्यं, तासाम्

'सुचेता'

आवश्यकतां च तां विवृतवान् ।

तस्मिन् विषये तयोर्मध्ये कश्चित् कालं यावत् वादविवादः प्रवृत्तः । वायुजलाहारैः विना अन्येषां केषामपि आवश्यकता नास्ति इति राज्ञ्याः वादः ।

'मानवानां जीवनार्थम् आहारः एव मुख्यः । किन्तु केवलेन आहारेण एव मानवाः जीवितुं न शक्नुवन्ति' इति देवशर्मणः वादः ।

विवादस्य परिहारं प्राप्तुम् अशक्नुवन्तौ राज्ञी राजा च विदूषकस्य दरहासस्य समीपं गत्वा उक्तवन्तौ यत् - एतद्विषये भवता निर्णयः वक्तव्यः इति ।

दरहासः क्षणकालम् आलोच्य पार्श्वे स्थितं रक्षकम् आहूतवान् । तस्य आगमनसमनन्तरं विषयं विवृत्य तस्य अभिप्रायं पृष्टवान् । तदा रक्षकः मन्दहासपूर्वकम् उक्तवान् - "मानवानाम् आहारः एव प्रधानः । तदनन्तरम् एव अन्ये विचाराः" इति ।

"तथा मा वदतु भवान् । केवलेन भोजनेन मानवाः जीवन्ति किम् ?" इति पृष्टवान् दरहासः ।

तदा रक्षकः - "किमर्थं न शक्यते ? अवश्यं जीवितुं शक्नुवन्ति एव" इति उक्तवान् ।

दरहासः ततः निर्मलादेवीसमीपम् आगत्य - "महाराज्ञि ! कृपया एकस्य सप्ताहस्य अवकाशं कल्पयतु । रक्षकद्वारा भवत्याः सन्देहं परिहरिष्यामि" इति उक्तवान् ।

दरहासस्य वचनं श्रुत्वा राज्ञी हसन्ती - "अस्तु, तथैव भवतु" इति उक्तवती ।



दरहासः रक्षकं नीत्वा एकस्मिन् प्रकोष्ठे बन्धने स्थापितवान्, समये आहारदानस्य व्यवस्थां कल्पितवान् च।

सप्ताहः अतीतः। दरहासः रक्षकं बहिः आहूय महाराज्ञी-महाराजयोः समीपं नीत्वा रक्षकम् उद्दिश्य - "किं भोः! सप्ताहं यावत् भवता कथं कालः यापितः?" इति पृष्टवान्।

"स्वामिन्! महत् कष्टम् अनुभूतवान् अहम्। कदा वा मां बहिः आह्वयेयुः इति सदा चिन्तयन् अहं कथञ्चित् प्राणान् रक्षितवान् आसम्। यदि बन्धनात् मम विमोचनं न अभविष्यत्, तर्हि अहम् आत्महत्याम् अकरिष्यम्" इति उक्तवान् रक्षकः।

दरहासः आत्मना किं किं कृतम् इति निर्मलादेवीं विवृतवान्।

एतत् श्रुत्वा देवशर्मा - "महाराज्ञि! श्रुतवती खलु! भवत्याः कथनानुसारम् आहारः मुख्यः एव। किन्तु केवलेन आहारेण सुखं न लभ्यते। प्राणरक्षणार्थम् आहारः आवश्यकः। किन्तु सन्तृप्त्या जीवितुम् आनन्दः, आह्लादः, चिन्तनम् इत्यादयः केचन अंशाः अपि अपेक्षिताः एव। निसर्गे किञ्चन सुन्दरं पुष्पं दृष्ट्वा आनन्दः भवति खलु! तथैव लयबद्धमधुरध्वनेः श्रवणेन अपि महान् आनन्दः प्राप्यते। एवं पञ्चेन्द्रियेभ्यः अपि सन्तृप्तिं कल्पयितुम् अर्हाः केचन अंशाः निसर्गे सन्ति। तादृशैः विना जीवनं कियत् कष्टकरम् इति चिन्तयतु भवती। 'जीवितुं खादनं, न तु खादितुं जीवनम्' इति ज्येष्ठानां हितवचनं यत् अस्ति, तत् सदा स्मर्तव्यम्" इति वदन् करताडनपूर्वकं दरहासं प्रशंसन् राज्ञीं दृष्टवान्।

राज्ञी शिरसः अवनमनद्वारा स्वदोषम् अङ्गीकृतवती। देवशर्मा तृप्त्या शिरः चालयन् राज्ञीम् उक्तवान् - "सर्वं सम्यक् अस्ति। किन्तु भवत्याः सन्देहनिवारणार्थं निरपराधिना रक्षकेण वृथा दण्डनम् अनुभोक्तव्यम् आपतितं खलु" इति।

एतत् श्रुत्वा निर्मलादेवी स्वकण्ठे विद्यमानं सुवर्णहारं निष्कास्य उपायनरूपेण रक्षकाय दत्तवती।






द्रौपद्याः स्वयंवरवार्तां श्रुत्वा बहवः राजकुमाराः विविधेभ्यः देशेभ्यः काम्पिल्यनगरं प्रति आगतवन्तः। आगतानां महाराजानां विशेषवसतिव्यवस्था कल्पिता। काम्पिल्यनगरं गताः पाण्डवाः अपि कस्यचित् कुम्भकारस्य गृहे उषितवन्तः। मधुकरीवृत्त्या ते आहारं सम्पादयन्ति स्म।

स्वपुत्री द्रौपदी अर्जुनाय दातव्या इति द्रुपदस्य मनसि इच्छा आसीत् एव। किन्तु सः तं विषयं कमपि न उक्तवान् आसीत्। अपि तु सः सामान्यैः उन्नेतुम् अशक्यं धनुः निर्माय राज्ये सर्वत्र प्रकटनं कारितवान् आसीत् यत् – आकाशे योजितं भ्रमत् मत्स्ययन्त्रं यः भिनत्ति, तस्मै द्रौपदी दीयते इति।

एतां वार्तां श्रुत्वा कर्णः, धृतराष्ट्रपुत्राः, अन्ये राजानः च आगतवन्तः। स्वयंवरस्य वैभवं द्रष्टुम् इच्छन्तः केचन ऋषयः अपि आगताः। द्रुपदः आगतान् ऋषीन् सादरं स्वागतीकृत्य तेषाम् आतिथ्यं कृतवान्।

नगरस्य ईशान्यदिशि स्वयंवरमण्डपः निर्मितः, सुन्दरतया अलङ्कृतः च। क्षत्रियाः ब्राह्मणाः च आगत्य मण्डपस्य पुरोभागे सभायाम् उपविष्टवन्तः। ब्राह्मणैः सह उपविष्टाः पाण्डवाः द्रुपदेन आयोजितां वैभवपूर्णां स्वयंवरव्यवस्थां दृष्ट्वा अतीव सन्तुष्टाः। आगताः अतिथयः नृत्यगान-विनोदैः कालयापनं कृतवन्तः।

अन्तिमदिने द्रौपदी मङ्गलस्नानं कृत्वा संकलानि आभरणानि धृत्वा, कौशेयवस्त्राणि च धृत्वा सुवर्णपुष्पमालां गृहीत्वा



स्वयंवरमण्डपम् आगतवती । द्रुपदस्य पुरोहितः सोमकः द्रौपद्याः आगमनतः पूर्वम् एव अग्निं परितः दर्भान् विकीर्य होमं कृतवान् आसीत् । मण्डपम् आगतां द्रौपदीं सोमकः आशिषा अनुगृहीतवान् ।

मण्डपं प्रति द्रौपद्याः आगमनसमये मङ्गलवाद्यघोषः कृतः । अनन्तरं धृष्टद्युम्नः मण्डपसमीपम् आगतवान् । मङ्गलघोषः स्थगितः । तदा धृष्टद्युम्नः तत्र सम्मिलितान् उद्दिश्य मत्स्ययन्त्रं धनुः च दर्शयित्वा उक्तवान् - "यः एकेन एव बाणप्रयोगेण एतस्य मत्स्ययन्त्रस्य भेदनं करोति, तं मम भगिनी द्रौपदी परिणेष्यति । तदर्थं भवतां सर्वेषाम् इदानीम् अवकाशः" इति ।

अनन्तरं धृष्टद्युम्नः द्रौपद्यै बहूनां राजकुमाराणां परिचयं कारितवान् । तेषु दुर्योधनः, शल्यः, विराट्, शकुनिः, अश्वत्थामा, अक्रूरः, साम्बः, प्रद्युम्नः, कृष्णः, कृतवर्मा, अनिरुद्धः, शिशुपालः, चित्राङ्गदः, भगदत्तः च प्रमुखाः आसन् । आगताः सर्वे अपि सौन्दर्यवतीं द्रौपदीं तन्मयतया पश्यन्तः आसन् ।

श्रीकृष्णः ब्राह्मणानां मध्ये उपविष्टान् पाण्डवान् अभिज्ञाय तं विषयं पार्श्वे स्थितं बलरामम् उक्तवान् ।

मत्स्ययन्त्रस्य भेदनकार्यक्रमः आरब्धः । राजकुमाराः एकैकशः अग्रे गत्वा मत्स्ययन्त्रस्य भेदनं कर्तुं प्रयत्नं कृतवन्तः । किन्तु तस्मिन् कार्ये विफलाः अपमानिताः च ते ततः प्रतिगतवन्तः । बहवः राजानः मत्स्ययन्त्रभेदने विफलाः जाताः । अनन्तरं कर्णः अग्रे गत्वा धनुः आकृष्य लक्ष्यपूर्वकं मत्स्ययन्त्रभेदनार्थम् उद्युक्तः । कर्णः एव द्रौपदीं जेष्यति इति परस्परं वार्तालापं कुर्वन्ति स्म सभायाम् उपविष्टाः । वन्दिनः अपि तस्मिन् समये कर्णस्य शौर्यपराक्रमादीन् प्रशंसितवन्तः । एतत् श्रुत्वा द्रौपदी गम्भीरस्वरेण उक्तवती यत् - अहं सूतपुत्रं न परिणेष्यामि इति ।

द्रौपद्याः एतत् वचनं श्रुत्वा कोपोद्रिक्तः कर्णः क्षणकालं सूर्यं दृष्ट्वा ततः निर्गतवान् । कर्णस्य निर्गमनानन्तरं शिशुपालः, जरासन्धः, शल्यः, अन्ये च केचन प्रमुखाः मत्स्ययन्त्रभेदने उद्युक्ताः, किन्तु ते विफलाः अभवन् ।



तदनन्तरं कोऽपि मत्स्ययन्त्रभेदनार्थम् अग्रे न गतवान्। सभासदः मन्दस्वरेण परस्परं वार्तालापम् आरब्धवन्तः।

तदा ब्राह्मणानां मध्ये उपविष्टः अर्जुनः उत्थाय धनुषः समीपं गतवान्। एतस्मात् अतीव आश्चर्यचकिताः ब्राह्मणाः, 'पराक्रमशालिनः शल्य-जरासन्ध-शिशुपालादयः एव विफलाः। एवं सति एषः किं वा साधयेत्? व्यर्थप्रयत्नः एव भविष्यति एतस्य। अपि च एषः ब्राह्मणकुलस्य एव अपमाननं करिष्यति' इति चिन्तितवन्तः। किन्तु केचन स्वगतम् उक्तवन्तः - "एषः बलवान् शस्त्रविद्यायां निपुणश्च स्यात् एव। अन्यथा मत्स्ययन्त्रभेदने उद्युक्तः न अभविष्यत् एषः" इति।

अर्जुनः धनुः नमस्कृत्य सभाम् अपि नमस्कृतवान्। अनन्तरं सः स्वगुरुं सविनयं प्रणम्य, कृष्णं मनसा स्मरन्, धनुः आकृष्य विना परिश्रमं मत्स्ययन्त्रस्य भेदनं कृतवान्। एतस्मात् सर्वे सभासदः स्तम्भीभूताः। सभाङ्गणं हर्षध्वनिना प्रतिध्वनितम् अभवत्। ब्राह्मणाः महता सन्तोषेण नृत्यं कृतवन्तः। तस्मिन् एव क्षणे युधिष्ठिरः नकुलसहदेवाभ्यां सह ततः स्ववसतिस्थानं गतवान्।

एतस्याः घटनातः स्वयंवरं प्रति आगताः राजकुमाराः अपमानिताः जाताः। 'अयं द्रुपदः किमपि कुतन्त्रम् आचरन् अस्ति। किम् एषः स्वपुत्रीं कस्मैचित् ब्राह्मणकुमाराय दद्यात्? किं ब्राह्मणवंशेषु एतादृशी स्वयंवरपद्धतिः आश्रीयते? किं द्रौपदी कश्चित् ब्राह्मणकुमारं परिणयेत्? एतादृशी घटना पुनः कदापि न प्रवर्तेत। तदर्थं द्रुपदस्य हननं करणीयम्। यदि द्रौपदी यं कश्चित् राजकुमारं परिणेष्यति, तर्हि वरम्। नो चेत् अग्नये एतस्याः आहुतिः दातव्या। ब्राह्मणः इत्यतः एतस्य प्राणहरणं मास्तु' इति अर्जुनविषये वदन्तः राजकुमाराः खड्गादिकं गृहीत्वा द्रुपदस्य उपरि आक्रमणार्थम् उद्युक्ताः। एतस्मात् भीतः द्रुपदः कथञ्चित् आत्मानं रक्षन् ततः पलायितवान्।

द्रुपदस्य उपरि आक्रमणार्थम् आगतान् राजकुमारान् भीमार्जुनौ सम्मुखीकृतवन्तौ। राजकुमाराः भीमार्जुनौ उद्दिश्य बाणप्रयोगम्

आरब्धवन्तः । तदा भीमः कश्चित् वृक्षम् उत्पाट्य, राजकुमाराणां बाणानाम् अवरोधं कुर्वन् तं वृक्षं गृहीत्वा अर्जुनस्य पार्श्वे स्थितवान् ।

ब्राह्मणाः द्रुपदं रक्षितुम् इच्छन्तः राजकुमारान् उद्दिश्य पाषाणखण्डान् क्षिप्तवन्तः । अर्जुनः येन धनुषा मत्स्ययन्त्रस्य भेदनं कृतवान्, तस्य एव धनुषः उपयोगं कुर्वन् राजकुमारैः सह युद्धं कृतवान् । अर्जुनस्य पराक्रमं दृष्ट्वा शल्य-कर्णादयः चिन्तितवन्तः यत् - यद्यपि एषः सामान्यः जनः, तथापि शस्त्रविद्यायां सुनिपुणः इति ।

अनन्तरम् अर्जुनकर्णयोः मध्ये युद्धं प्रवृत्तम् । अर्जुनस्य शौर्यसाहसादिकं दृष्ट्वा आश्चर्यचकितः कर्णः अर्जुनं पृष्टवान् - "हे ब्राह्मणश्रेष्ठ ! भवतः शस्त्रकौशलदर्शनात् अहम् अतीव सन्तुष्टः । किन्तु मया सह युद्धं कर्तुम् अर्जुनात् ऋते अन्यः कोऽपि समर्थः न । अतः सत्यं वदतु तावत् - भवान् कः ?" इति ।

अर्जुनः आत्मनः परिचयम् न उक्तवान् । ब्राह्मणेन सह युद्धकरणं न युक्तम् इति विचिन्त्य कर्णः युद्धं स्थगितवान् ।

अत्रान्तरे भीमशल्ययोः मध्ये युद्धम् आरब्धम् आसीत् । भीमः शल्यम् उन्नीय कुत्रचित् क्षिप्तवान्, यतः तस्य मारणोद्देशः तु न आसीत् एव भीमस्य ।

एते ब्राह्मणाः न सामान्याः इति तु स्पष्टम् अभवत् । एते के इति ज्ञातव्यम् इति सर्वेषु कुतूहलम् उत्पन्नम् । कृष्णः राजकुमारान्



उद्दिश्य उक्तवान् - "एते ब्राह्मणाः न्याय्यरूपेण द्रौपदीं प्राप्तवन्तः सन्ति । राजकुमारैः सह धर्मेण एव युद्धं कृतवन्तः सन्ति । अतः तैः ब्राह्मणैः सह युद्धकरणं न उचितम्" इति ।

कृष्णस्य वचनं पुरस्कृत्य सर्वे राजकुमाराः युद्धं परित्यज्य स्वस्वदेशं प्रतिगतवन्तः ।

कुम्भकारस्य गृहे स्थिता कुन्ती - 'सुदीर्घः कालः अतीतः चेदपि पुत्राः न प्रत्यागताः । एवं तर्हि पुत्राणां किं जातं स्यात् ?' इति चिन्तयन्ती सातङ्का जाता । तावता नकुलसहदेवाभ्यां सह युधिष्ठिरः तत्र गतवान् । किञ्चित्कालानन्तरं भीमार्जुनौ अपि द्रौपद्या सह स्ववसतिस्थानम्



आगतवन्तौ।

भीमार्जुनयोः आगमनसमये कुन्ती गृहस्य अन्तः आसीत्। भीमार्जुनौ गृहं प्रविशन्तौ एव मातरम् उद्दिश्य उक्तवन्तौ यत् - अम्ब ! अस्माभिः भिक्षा आनीता अस्ति इति। 'आनीतां भिक्षां सर्वे विभज्य स्वीकुर्वन्तु' इति वदन्ती कुन्ती अन्तर्भागात् बहिः आगतवती। तत्र भीमार्जुनाभ्यां सह स्थितवतीं कान्तिमतीं सुन्दरीं द्रौपदीं दृष्ट्वा दिग्भ्रान्ता जाता सा।

क्षणकालानन्तरं कुन्ती आत्मानं निगृह्य युधिष्ठिरम् उक्तवती - "वत्स ! मया महान् अपराधः आचरितः। भीमार्जुनाभ्यां भिक्षा आनीता इति श्रुत्वा सर्वे विभज्य स्वीकुर्वन्तु इति मया उक्तम्। किन्तु मया कदापि अनृतं न उक्तम्। मम वचनानुसारम् एतां कन्यां भवन्तः पञ्च जनाः अपि यदि स्वीकुर्वन्ति, तर्हि अधर्मः आचरितः भविष्यति। अन्यथा मया अनृतम् उक्तं भविष्यति। अतः धर्ममार्गम् अनुसरन्तः भवन्तः यथोचितं व्यवहरन्तु" इति।

मातुः वचनं श्रुत्वा युधिष्ठिरः क्षणकालं विचिन्त्य 'एतद्विषये भवती चिन्तां मा करोतु' इति मातरम् उक्तवान्। अनन्तरं सः अर्जुनम् उक्तवान् - 'भवान् द्रौपदीं शास्त्ररीत्या परिणयतु' इति।

"भवान् भीमः च मम अग्रजौ। भवतोः विवाहं विना मम विवाहः न युक्तः खलु !" इति उक्तवान् अर्जुनः।

कुन्त्याः वचनम्, अर्जुनस्य वचनं च श्रुत्वा युधिष्ठिरः क्षणकालं विचिन्त्य भ्रातृन् उक्तवान् - "वयं पञ्च जनाः अपि एतां द्रौपदीं परिणयामः" इति।

तावता कृष्णः पाण्डवानां वसतिस्थानम् अन्विष्यन् बलरामेण सह तत्र आगतवान्। कुन्तीं युधिष्ठिरं च नमस्कृतवान् सः। तदा युधिष्ठिरः पृष्टवान् - "कृष्ण ! वयं ब्राह्मणवेषं धृत्वा अज्ञातरूपेण अत्र वसन्तः आस्म। अस्मान् कथम् अभिज्ञातवान् भवान् ? भवान् कथम् अत्र आगतवान् ?" इति।

तदा कृष्णः मन्दहासपूर्वकं - "राजन् ! अग्नेः गोपनं शक्यं किम् ? अद्य स्वयंवरे प्रदर्शितः पराक्रमः पाण्डवेभ्यः ऋते अन्यैः शक्यः किम् ? दुर्मार्गिणः दुर्योधनस्य कुतन्त्रं न फलितम् इत्यतः सर्वं शुभम् एव जातम्।

भवन्तः अज्ञातरूपेण वसन्तः अत्र आगतवन्तः यत्, तत् भवतां हिताय एव जातम्'' इति उक्त्वा बलरामेण सह ततः निर्गतवान्।

अत्रान्तरे धृष्टद्युम्नः 'मत्स्ययन्त्रभेदनपूर्वकं द्रौपदीं जितवान् ब्राह्मणः कः ? तस्य वसतिस्थानं च कुत्र स्यात् ? सः द्रौपदीं कुत्र नयेत् ?' इति ज्ञातुम् इच्छन् रहस्यरूपेण अन्यैः ब्राह्मणैः सह गच्छन् कुम्भकारस्य गृहसमीपं गत्वा एकत्र निलीय स्थितवान्।

कुम्भकारस्य गृहात् कृष्णबलरामयोः निर्गमनानन्तरं भीमार्जुनौ नकुलसहदेवौ च गत्वा मधुकरान्नम् आनीतवन्तः । 'तत्र कश्चन भागं अतिथिनिमित्तं स्थापयित्वा अवशिष्टे भागद्वयं करोतु। एकं भागं भीमाय ददातु । अपरं भागं चतुर्धा विभज्य युधिष्ठिराय अर्जुनाय नकुलाय सहदेवाय च परिवेषयतु' इति कुन्ती द्रौपदीम् उक्तवती। कुन्त्याः वचनानुसारं द्रौपदी सर्वेभ्यः परिवेषितवती।

भोजनानन्तरं सहदेवः भूमौ दर्भान् विकीर्णवान् । विकीर्णानां दर्भाणाम् उपरि हरिणाजिनं प्रसार्य, तदुपरि सर्वे शयनं कृतवन्तः । द्रौपदी पाण्डवानां पादसमीपे शयनं कृतवती।

पाण्डवाः युद्धव्यूहस्य भेदोपायविषये, विविधानाम् अस्त्राणां प्रयोगोपसंहारविषये च किञ्चित्कालं यावत् परस्परं चर्चां कृतवन्तः । धृष्टद्युम्नः पाण्डवानां वार्तालापं रहस्ये एव स्थित्वा शृण्वन् निर्णीतवान् यत् - एते ब्राह्मणवेषधारिणः क्षत्रियाः एव इति। सः ततः गृहं गत्वा पितरं द्रुपदं निवेदितवान् - ''उभौ ब्राह्मणौ द्रौपदीं नीतवन्तौ। तयोः वसतिस्थानसमीपं गत्वा मया दृष्टम्। तयोः त्रयः सहोदराः सन्ति। तेषां माता अपि अस्ति । अपि च ते क्षत्रियश्रेष्ठाः इत्यत्र नास्ति सन्देहः। अतः ते पाण्डवाः एव इति मम अभिप्रायः'' इति।

धृष्टद्युम्नस्य एतत् वचनं श्रुत्वा 'स्वकीया इच्छा पूरिता जाता' इति द्रुपदः अतीव सन्तुष्टः। पाण्डवानां पूर्वापरं विस्तरेण ज्ञात्वा आगच्छतु इति स्वपुरोहितं प्रेषितवान् द्रुपदः।



# कृपणः करुणाकरः

अमृतापुरनामके ग्रामे करुणाकरनामकः कुसीदवणिक् आसीत् । सः जनेभ्यः ऋणं ददाति स्म, वृद्धिसहितं प्रतिस्वीकरोति स्म च । एवंप्रकारेण सः प्रभूतं धनं सम्पादितवान् आसीत् । जनाः तं कृपणः करुणाकरः इति वदन्ति स्म । किन्तु जनानाम् एतादृशं वचनं श्रुत्वा अपि करुणाकरः कुपितः न भवति स्म । अपि तु सः वदति स्म - ''यस्य समीपे धनम् एव नास्ति, सः कृपणः भवितुं न अर्हति । किन्तु यः धनवान् भवति, तस्मिन् यदि कृपणता स्यात्, तर्हि सा सहजा एव । यतः सः येषां धनस्य आवश्यकता अस्ति, तेषां साहाय्यं ऋणदानपूर्वकं करोति'' इति ।

कदाचित् करुणाकरः क्षेत्रात् गृहं गच्छति स्म । मार्गपार्श्वे कश्चित् चर्मकारः पादरक्षां निर्माय विक्रीणीते स्म ।

चर्मकारः करुणाकरं दृष्ट्वा काश्चित् पादरक्षां प्रदर्शयन् उक्तवान् - स्वामिन् ! उत्तमाः पादरक्षाः सन्ति । विपण्यां चेत् एतस्याः मूल्यं विंशतिरूप्यकाणाम् अपेक्षया अपि अधिकं भवति । किन्तु अहं दशरूप्यकैः एव एतस्याः विक्रयणं कुर्वन् अस्मि । कृपया स्वीकरोतु भवान्'' इति ।

चर्मकारस्य वचनं श्रुत्वा करुणाकरः तिरस्कारदृष्ट्या पादरक्षाः पश्यन् उक्तवान् - ''भ्रातः ! दृढौ मम पादौ तु कदापि छिन्नौ न भवतः । एतादृशयोः पादयोः एतादृश्यः सामान्यपादरक्षाः किमर्थम् ? पादरक्षानिमित्तं मया अत्र न आगतम्, अपि तु मार्गे मिलितः स्नेहितः कश्चित् धूमवर्तिकां दत्तवान् । तस्य समीपे धूमवर्तिकायाः ज्वालनार्थम् अग्निपेटिका न आसीत् । धूमपानं कुर्वन् भवान् मया दृष्टः । अतः अत्र आगतवान् अहम् । सकृत् अग्निपेटिकां ददातु'' इति ।



# राणीवृक्षः

आर्द्रप्रदेशेषु, नदीतीरप्रदेशेषु, गुल्मानां च मध्ये दृश्यमानेषु पाटलसस्यसदृशेषु वृक्षेषु सुन्दराणि पुष्पाणि भवन्ति । एतानि पुष्पाणि 'राणीपुष्पम्' इति नाम्ना प्रसिद्धानि । स्वीडिष्वृक्षशास्त्रज्ञः म्याग्नस् वि. लाजेर्स्ट्राम्वर्यः एतत् पुष्पं 'प्लास् रेजिने (राणीपुष्पम्) इति वर्णितवान् । तस्य महाशयस्य नाम्नः कारणतः एव वृक्षशास्त्रे एतत् 'लाजेर्स्ट्रोमिया प्लास्रेजिने' इति उच्यते । एतानि पुष्पाणि अतीव सुन्दराणि भवन्ति । एतस्य मुकुलानि यदा विकसितानि भवन्ति, तदा कृष्णहरितवर्णमिश्रितानि भवन्ति । पक्वतां प्राप्य पतनसमये श्वेतवर्णीयानि भवन्ति । एतानि पुष्पाणि गुच्छरूपेण भवन्ति । एतानि वर्षे द्विवारं, तन्नाम एप्रिल्-मेमासयोः, जुलै-अगस्ट् मासयोःच विकसितानि भवन्ति । एतेषां वृक्षाणां पर्णानाम् उपरिभागः स्फुटहरिद्वर्णेन अधोभागश्च श्वेतमिश्रित-हरिद्वर्णेन च युक्तः भवति । पर्णानाम् अन्तः स्थितः सिराः (नाड्यः) मृद्व्यः भवन्ति । एप्रिल्मासे मे-मासे वा वृक्षः पल्लवितः भवति ।



हरिद्वर्णयुताः एतस्य शलाटवः पक्वताकाले कृष्णवर्णीयतां प्राप्नुवन्ति । एतस्य फलानि शीघ्रं न पतन्ति, अपि तु बहूनि दिनानि यावत् वृक्षे एव संलग्नानि भवन्ति ।

नौकानिर्माणार्थं शालाभवननिर्माणार्थं च एतस्य काष्ठस्य उपयोगः क्रियते । सुदीर्घकालं दृढं जीवति एतस्य काष्ठम् इत्यतः एव नौकास्थानस्थानां स्तम्भानां निर्माणार्थम् एतस्य काष्ठस्य उपयोगः क्रियते । विदेशस्थेषु नौकानिस्स्थानकेषु अपि एतस्य महान् उपयोगः क्रियते । अतः एतस्य उत्पादकस्य अस्माकं देशस्य प्रसिद्धिः महती अस्ति ।

एषः वृक्षः हिन्दीभाषया जारुल् इति, बङ्गालीभाषया 'आजार्' इति, मराठीभाषया 'टामन्' इति, ओरियाभाषया 'पटोली' इति, तमिळुभाषया 'कडलि' इति, मलयालभाषया 'आटम्पू' इति कन्नडभाषया 'चळ्ळे' इति च उच्यते ।

# मार्कण्डेयः



हिमालयप्रदेशे वासं कुर्वतः मृकण्डुमुनेः अपत्यानि न आसन्। पुत्रप्राप्त्यर्थं सः शिवम् उद्दिश्य तपः कृतवान्। तदा विश्वरूपी शिवः प्रत्यक्षीभूय मृकण्डुम् उद्दिश्य - "भवान् षोडशवर्षाणाम् आयुष्मन्तं विवेकिनं बुद्धिमन्तं च पुत्रम् इच्छति, उत चिरञ्जीविनं बुद्धिहीनं पुत्रम् इच्छति ? एतयोः अन्यतरेण पुत्रेण भवन्तम् अनुग्रहीष्यामि अहम्" इति उक्तवान्।

'विवेकी पुत्रः एव भवतु' इति शिवं प्रार्थितवान् मृकण्डुः। शिवः अनुगृहीतवान्। अनन्तरकाले मृकण्डोः पुत्रः जातः। 'मार्कण्डेयः' इति पुत्रस्य नामकरणं कृतम्। मार्कण्डेयः अतीव बुद्धिमान् विवेकी च आसीत्।

मार्कण्डेयः यदा दशवर्षीयः जातः, तदा एव सुदूरेभ्यः अपि प्रदेशेभ्यः पण्डिताः स्वसन्देहनिवारणार्थं मार्कण्डेयसमीपम् आगच्छन्ति स्म।

मार्कण्डेयः द्वादशे वयसि एव उत्तमः गुरुः, निष्ठावान् मुनिः च इति प्रख्यातः अभवत्।

किन्तु मार्कण्डेयस्य मातापितरौ अत्यन्तं चिन्तामग्नौ आस्ताम्। एकैकं दिनम् अपि ताभ्यां भयेन आतङ्केन च याप्यते स्म। तथापि तौ स्वचिन्तायाः कारणं पुत्रं न उक्तवन्तौ। मार्कण्डेयस्य षोडशे वयसि तस्य मातापितरौ दुःखं सोढुम् अशक्तौ अश्रूणि स्रावितवन्तौ।

मातापित्रोः किमर्थं दुःखं स्यात् इति आश्चर्यम् अनुभवन् मार्कण्डेयः तयोः दुःखस्य कारणं पृष्टवान्। तदा अनन्यगतिकौ मातापितरौ वस्तुस्थितिं निवेदितवन्तौ। किन्तु मातापितरौ स्वकीयम् आयुः यदि त्यागं कुरुतः तर्हि मार्कण्डेयः चिरञ्जीवी भवितुं शक्नोति स्म।

मार्कण्डेयः दुःखितौ मातापितरौ सान्त्वयित्वा ततः किञ्चन एकान्तं स्थलं गतवान्। तत्र शिवध्यानं कुर्वन् उपविष्टवान्

च।

मार्कण्डेयस्य आयुः समाप्तम् । मरणकालः सन्निहितः । यमभटाः मार्कण्डेयस्य प्राणान् नेतुम् आगतवन्तः । किन्तु तेजस्विनं मार्कण्डेयं स्प्रष्टुम् अपि अशक्ताः ते ततः प्रतिगतवन्तः ।

एतं विषयं ज्ञात्वा यमः एव स्वयं मार्कण्डेयसमीपम् आगत्य मार्कण्डेयस्य उपरि यमपाशं क्षिप्तवान् । सः पाशः मार्कण्डेयेन पूज्यमानस्य शिवलिङ्गस्य स्पर्शम् अकरोत् । अपरक्षणे एव कोपोद्रिक्तः शिवः शिवलिङ्गात् प्रत्यक्षः जातः । तस्मात् यमः मृतः अभवत् । एतस्मात् एव शिवः 'मृत्युञ्जयः' इति नाम प्राप्तवान् ।

किञ्चित्कालानन्तरं शिवः शान्तः इत्यतः यमः पुनर्जन्म प्राप्तवान् । तावता मार्कण्डेयस्य मरणसमयः अतीतः आसीत् ।

अनन्तरं शिवः मार्कण्डेयं वरेण अनुगृहीतवान् यत् - भवान् सदा षोडशवयस्कः एव तिष्ठतु इति । तस्मात् मार्कण्डेयः चिरञ्जीवी जातः ।

एतस्याः पुराणकथातः केचन पारमार्थिकाः विचाराः अपि ज्ञायन्ते । मार्कण्डेयः स्वशरीरं व्यक्तित्वं च परित्यज्य मृत्युरहिते शाश्वते भगवति लीनः जातः ।

मार्कण्डेयः अन्तरात्मनि कालातीतः इति कारणतः एव सः सदा षोडशवयस्कः एव अस्ति । तस्य भूत-भविष्यद्-वर्तमान-कालादयः न सन्ति । सः अनन्तः । एषः महान् आध्यात्मविचारः इति वक्तुं शक्यते ।



# भवन्तः जानन्ति वा ?

१. बुद्धः धर्मप्रचारं कुत्र आरब्धवान् ?
२. सः देशः कः, यश्च हिट्लर्वर्येण १९३८ तमे वर्षे स्वायत्तीकृत्य १९४५ तमे वर्षे परित्यक्तः ?
३. भूमौ वासं कुर्वत्सु जन्तुषु (प्राणिषु) बृहत्तमः कः ?
४. 'अर्जुन' नामकं पारितोषिकं प्राप्तवान् प्रथमः भारतीयः क्रिकेट्क्रीडापटुः कः ?
५. पूनानगरस्य पूर्वतनं नाम किम् ?
६. कलकत्तानगरं केन स्थापितम् ?
७. गजः सामान्यतः कति वर्षाणि जीवति ?
८. ईजिप्ट्देशवासिभिः अधिकसंख्याकैः उपयुज्यमाना भाषा का ?
९. 'अबिसीनिया' याः इदानीन्तनं नाम किम् ?
१०. सः आङ्ग्लकविः कः, यश्च कवीनां कविः इति प्रसिद्धः ?
११. इटलीदेशस्य विनिमयद्रव्यस्य नाम किम् ?
१२. ऐरावतनामकः गजः कस्य देवस्य वाहनम् ?
१३. ऐदम्प्राथम्येन अन्तरिक्षे पादार्पणं केन कृतम् ?
१४. उन्नततमः भूवासी प्राणी कः ?
१५. 'पार्सि' जनानां पवित्रग्रन्थस्य नाम किम् ?
१६. 'एञ्जल्फाल्स्' नामकः जलपातः कस्मिन् देशे अस्ति ?
१७. वाटर्लूयुद्धे नेपोलियन्वर्यः केन पराजितः अभवत् ?
१८. पाकिस्थानस्य प्रथमः अध्यक्षः कः ?
१९. 'केनडा' देशस्य दीर्घतमा नदी का ?

## उत्तराणि

१. वाराणसीसमीपस्थे सारानाथे ।
२. आस्ट्रियादेशः ।
३. मकरः ।
४. सलीं दुरानि (१९६१ तमे वर्षे) ।
५. गोल्ड् कोस्ट् ।
६. जाब्चार्नक्वर्येण ।
७. ७०-८० वर्षाणि ।
८. अरब्बीभाषा ।
९. एथियोपिया ।
१०. एड्मण्ड् स्पेन्सर्वर्यः ।
११. लीरा ।
१२. इन्द्रस्य ।
१३. अलेक्सि लियोनाव्वर्येण ।
१४. जिराफे ।
१५. जेन्द् अवेस्ता ।
१६. वेनीजुलादेशे ।
१७. आर्थर् वेल्लेस्लीवर्येण ।
१८. महम्मद् अलीजिन्ना ।
१९. मेकेन्जी ।



# किंवदन्तीश्रवणम्

सीतापतेः एकमात्रपुत्री सुशीला गुणवती सुन्दरी च । कदाचित् पार्श्वग्रामस्थः वीरभद्रः सीतापतये वार्ता प्रेषितवान् यत् - भवतः पुत्रीं मम स्नुषात्वेन स्वीकर्तुम् इच्छामि अहम् इति । वीरभद्रस्य गृहस्थितिः कथम् अस्ति इति ज्ञातुम् इच्छन् सीतापतिः वीरभद्रस्य ग्रामं गतवान् ।

वीरभद्रः धनिकः, विद्यावान्, गौरवान्वितपुरुषः च । सः गृहं प्रति आगतं सीतापतिं सादरं सत्कृत्य उक्तवान् - "भवतः पुत्री गुणवती इति विषयः बहूनां द्वारा मया श्रुतः अस्ति । तादृशी गुणवती मम स्नुषा भवतु इति मम आशयः । भवता वरदक्षिणा दातव्या नास्ति । विवाहः अपि वैभवेन करणीयः नास्ति । सम्प्रदायरीत्या सरलविवाहं कृत्वा भवतः पुत्रीं मम गृहं प्रेषयतु" इति ।

वीरभद्रस्य पुत्रः जयन्तः सुन्दरः युवकः । ज्येष्ठेषु तस्य अतीव गौरवम् । अतः सर्वरीत्या अपि एषः विवाहसम्बन्धः युक्तः अस्ति इति ज्ञात्वा सीतापतिः स्वगृहं गत्वा एतं विचारं सर्वान् सूचितवान् । एतत् श्रुत्वा सर्वे गृहसदस्याः अतीव सन्तुष्टाः ।

एवं सति रमाकान्तनामकः कश्चित् आगत्य आघातकरीं वार्तां श्रावितवान् । सः एवम् उक्तवान् - "वीरभद्रः केनचित् सह सम्भाषमाणः एवं वदति स्म - 'सीतापतिः अत्यन्तं निर्धनः । सुन्दर्याः सुशीलायाः तस्मिन् गृहे स्थितिः सर्वथा न शोभते । सुशीलया धनिककुले जन्म प्राप्तव्यम् आसीत् । अतः तस्मात् गृहात् सुशीलायाः विमोचनं करणीयम् इति उद्देशेन अहम् एतं सम्बन्धं वरदक्षिणां विना अङ्गीकृतवान् अस्मि । यः कोऽपि भिक्षुकतः धनं स्वीकरोति किम् ? सीतापतिः अपि भिक्षुकतुल्यः । अतः सः दातुम् इच्छति चेदपि ततः धनं न



स्वीकरिष्यामि अहम्' इति। अपि च वीरभद्रः सीतापतेः व्यवहारविषये अपि उपहासपूर्वकं सम्भाषणं कृतवान्'' इति।

रमाकान्तस्य वचनं श्रुत्वा नितरां क्रुद्धः सीतापतिः 'भवतः सम्बन्धः एव मास्तु इति वीरभद्राय वार्तां प्रेषयिष्यामि' इति उक्तवान्।

तदा सीतापतेः पिता रघुपतिः सीतापतिं बोधितवान् - ''पूर्वं यदा भवता वीरभद्रस्य गृहं गतम् आसीत्, तदा तेन अत्यन्तं गौरवपूर्वकं व्यवहृतं खलु ! एवं सति इदानीं भवद्विषये सः लघुसम्भाषणं कृतवान् इत्युक्ते तस्य किमपि कारणं स्यात् एव। अन्येषां वचनेषु विश्वासः किमर्थम् ? भवान् स्वयं वीरभद्रं दृष्ट्वा वस्तुस्थितिं ज्ञात्वा आगच्छतु'' इति।

सीतापतिः आरम्भे यद्यपि पितुः वचनं न अङ्गीकृतवान्, तथापि क्षणकालानन्तरं शान्तमनस्कः सन् चिन्तितवान् सः। पितुः कथनं युक्तम् इति अभासत। श्रुता वार्ता यदि सत्यं स्यात्, तर्हि वीरभद्रः सम्यक् निन्दनीयः इति चिन्तयन् एव सीतापतिः वीरभद्रस्य ग्रामं प्रति प्रस्थितः।

मध्येमार्गं कश्चित् कृषिकः दृष्टः सीतापतिना। सः कृषिकः स्वक्षेत्रस्य कञ्चित् भागं वीरभद्राय विक्रीतवान् आसीत्। कृषिकेण वीरभद्राय दत्तं क्षेत्रं फलवत् न इति, तदर्थं च यत् धनं कृषिकाय दत्तं, तत् दानाय जातम् इति च वीरभद्रः अन्यान् वदन् अस्ति इति विषयः कृषिकेण श्रुतः आसीत्। अतः वस्तुस्थितिं ज्ञातुम् इच्छन् कृषिकः अपि वीरभद्रसमीपम् एव प्रस्थितः आसीत्।

कृषिकस्य कथां श्रुत्वा सीतापतिः - ''अहम् अपि तादृशकार्यनिमित्तम् एव प्रस्थितः अस्मि'' इति उक्तवान् स्नेहभावेन। उभौ अपि अग्रे गतवन्तौ। मार्गपार्श्वे कश्चित् वणिक् अश्वशकटं समीकुर्वन् आसीत्। सः वणिक् स्वदरिद्रावस्थायां वीरभद्रतः एकसहस्रं रूप्यकाणि स्वीकृतवान् आसीत्। तेन धनेन नगरं गत्वा वाणिज्यं कृत्वा प्रभूतं धनं सम्पादितवान् आसीत् सः। अनन्तरं वीरभद्रस्य धनं प्रत्यर्प्य प्रतिवर्षं तस्मै मूल्ययुतानि बहूनि वस्तूनि उपायनपूर्वकं प्रेषयन् आसीत् सः। कदाचित् नगरम् आगतं वीरभद्रं सादरं सत्कृतवान् आसीत् वणिक्।

किन्तु वीरभद्रः 'वणिक् कृतघ्नः। कदापि मां द्रष्टुं न आगतवान्' इति वीरभद्रः उक्तवान् इति विषयं श्रुत्वा खिन्नः वणिक् वीरभद्रेण मेलितुं तस्य ग्रामं प्रति प्रस्थितः आसीत्।

सीतांपतिः कृषिकः च वीरभद्रं द्रष्टुम् एव प्रस्थितौ इति ज्ञात्वा वणिक् उक्तवान् - "मम शकटस्य समीकरणकार्यम् इदानीं समाप्तं भविष्यति। अतः वयं त्रयः अपि एतेन शकटेन एव गन्तुं शक्नुमः" इति।

वणिजः वचनं सीतापतिः कृषिकः च अङ्गीकृतवन्तौ।

किञ्चित्कालानन्तरं शकटः प्रयाणार्थं सिद्धः जातः। त्रयः अपि तेन शकटेन अग्रे गतवन्तः। मध्येमार्गं कश्चित् कविः तैः दृष्टः। सः कविः वीरभद्रस्य साहाय्यात् कस्यचित् भूस्वामिनः परिचयं प्राप्तवान् आसीत्। तस्मात् सः कीर्तिं प्रभूतं धनं च प्राप्तवान् आसीत्। किन्तु सः कविः वीरभद्रविषयम् अधिकृत्य काव्यं न रचितवान् इत्यतः सर्वेषां पुरतः तं कविम् उपहसितवान् आसीत् वीरभद्रः। अतः कविः एतं विचारं तान् निवेद्य उक्तवान् - "वीरभद्रविषये किञ्चन पद्यं रचितवान् अहम्। वीरभद्रं श्रावितवान् च। एतत् श्रुत्वा वीरभद्रः - 'अहं सामान्यः मानवः। अतः एतस्मिन् पद्ये मम या प्रशंसा कृता, तदर्थम् अर्हः न अहम्। कृपया मद्विषये एवं मा लिखतु' इति मां सविनयं प्रार्थितवान् आसीत्। काव्ये वस्तुस्थितेः निरूपणं मम स्वभावः। वीरभद्रस्य व्यवहारः मह्यं न अरोचत। अतः वीरभद्रः मां क्षमां यथा प्रार्थयेत् तथा कर्तुं वीरभद्रगृहं प्रति





शक्तवन्तः ते। तथापि तेषु वीरभद्रविषयकः द्वेषभावः आसीत् इत्यतः ते गृहस्य अन्तः न गतवन्तः, अपि तु अङ्गणे एव स्थितवन्तः।

तावता वीरभद्रेण सह सम्भाषमाणः अङ्गणे स्थितः उक्तवान् - "स्वामिन्! मम विषये सुष्ठु न चिन्तितं भवता" इति।

"अत्र चिन्तनीयं किम् अस्ति ? सकृत् वचनं दत्तं चेत् तस्मिन् विषये प्रतिप्रश्नः एव नास्ति। एषः मम स्वभावः" इति उक्तवान् वीरभद्रः।

तदा अङ्गणे स्थितः मनुष्यः सीतापत्यादीनां समीपम् आगत्य तान् सविनयं - "भवन्तः सर्वे यदि एतस्य वीरभद्रस्य आत्मीयाः, तर्हि कृपया मम साहाय्यं कर्तुम् एतं सूचयन्तु" इति उक्त्वा स्वकथां तान् निवेदितवान्।

तस्य विषयः एवम् असीत् - तस्मिन् एव ग्रामे वीरभद्रस्य अन्यत् किञ्चन मृच्छदगृहम् असीत्। पूर्वं वीरभद्रः तस्मिन् गृहे निवसति स्म। क्रमशः सः धनं सम्पादयन् नूतनं विशालं गृहं निर्माय तत्र वासम् आरब्धवान्। पूर्वतनं मृच्छदगृहं मङ्गलकार्यक्रमाणां निमित्तम्, आगतानां बान्धवानां वसत्यर्थं च उपयुङ्क्ते स्म। दिनेषु अतीतेषु तत् गृहं पुरातनं जातम्। सूर्यनाथनामकः कृषिकः तस्य गृहस्य क्रयणार्थं वीरभद्रं पृष्टवान्। वीरभद्रः अल्पमूल्येन एव सूर्यनाथाय तस्य गृहस्य विक्रयणं अङ्गीकृतवान्। गृहस्य क्रयणार्थं सूर्यनाथः धनसञ्चयं कुर्वन् असीत्। वीरेशनामकः अपरः कश्चित् तस्मिन् एव

प्रस्थितवान् अस्मि अहम्" इति।

कविः अपि तैः सह एव शकटेन प्रस्थितः।

तैः वीरभद्रस्य गृहप्राप्तिसमये सायङ्कालः जातः आसीत्। तस्मिन् समये वीरभद्रः गृहस्य पुरतः अङ्गणे उपविश्य केनचित् सह वार्तालापं कुर्वन् आसीत्। शकटात् अवतीर्णान् सीतापतिं, कृषिकं, वणिजं कविं च दृष्ट्वा वीरभद्रः महता स्नेहेन - 'मम आत्मीयाः भवन्तः सर्वे मिलित्वा मम गृहम् आगतवन्तः इति तु महतः सन्तोषस्य विषयः' इति वदन् तान् सादरं स्वागतीकृत्य तेषाम् आनुकूल्यं कल्पयितुं स्वकर्मकरं सूचितवान्। वीरभद्रस्य स्नेहपूर्णं व्यवहारं दृष्ट्वा, यदर्थम् आगतम् आसीत्, तत् वक्तुं न

ग्रामे निवसति स्म । सः सूर्यनाथस्य सौभाग्यं वीरभद्रस्य सौजन्यं च प्रशंसितवान् । तत् श्रुत्वा सूर्यनाथः तिरस्कारपूर्वकम् उक्तवान् - "तत् मृच्छदगृहं पिशाचानां वसतिस्थानम् । विना मूल्येन दीयते चेदपि तत् गृहं कोऽपि न इच्छेत् । अहं धनं दत्त्वा तत् गृहं क्रेष्यामि । यतः मम आवश्यकता अस्ति । अत्र वीरभद्रस्य सौजन्यप्रश्नः एव नास्ति" इति ।

वीरेशः सूर्यनाथेन उक्तं वीरभद्रं निवेद्य - "तादृशाय कृतघ्नाय सूर्यनाथाय गृहं मा ददातु, अपि तु मह्यं ददातु" इति प्रार्थितवान् ।

किन्तु वीरभद्रः वीरेशस्य वचनं न अङ्गीकृतवान् । अपि तु सः उक्तवान् - 'अहं वचनभ्रष्टः भवितुं न इच्छामि' इति ।

सीतापतिम् उद्दिश्य सर्वं वदतः वीरेशस्य समीपम् आगत्य वीरभद्रः उक्तवान् - "कदाचित् सन्दर्भवशात् अन्येषां विषये किमपि अविद्यमानकथनं सर्वत्र प्रचलति । तादृशः अभ्यासः ममापि अस्ति । किन्तु तादृशवचनेषु विश्वासः न करणीयः । प्रत्यक्षकथनम् एव प्रमाणम् । किंवदन्तीकरणम् एव केषाञ्चित् अभ्यासः । किन्तु अहं तादृशेषु न विश्वसिमि । मम आत्मीयाः चेत् ते मम परतया एव सम्भाषणं कुर्वन्ति, न तु भवत्परतया । अतः भवान् इदानीं गन्तुम् अर्हति" इति ।

वीरभद्रस्य एतानि वचनानि श्रुत्वा सीतापतिः अन्ये च आश्चर्यचकिताः । अपि च तदा ते ज्ञातवन्तः यत् - किंवदन्तीविषये विश्वासः न करणीयः इति ।

अनन्तरं सीतापतिः अन्ये च 'अस्माकं त्वरितकार्याणि सन्ति । अतः इदानीं वयं गच्छामः । पुनः कदाचित् आगच्छामः' इति वीरभद्रम् उक्त्वा ततः प्रतिगतवन्तः ।

त्वरितकार्यं यदि स्यात्, तर्हि किमर्थं तैः आगतं, किमर्थं च प्रतिगतम् इति अजानन् वीरभद्रः आश्चर्यचकितः जातः ।

संस्कारदायकं वीरभद्रस्य स्नेहम् आत्मीयतां च दृष्ट्वा सीतापतिः अन्ये च अतीव सन्तुष्टाः ।





# त्वराशीलः रामनाथः

कस्मिंश्चित् ग्रामे रामनाथनामकः कश्चित् पुरोहितः आसीत् । सर्वेषु विषयेषु अपि सः त्वरां करोति स्म।

कदाचित् पार्श्वग्रामात् पौरोहित्य-निमित्तं रामनाथाय आह्वानम् आगतम् । रामनाथः प्रातः शीघ्रमेव उत्थाय गमनार्थं सन्नाहं कुर्वन् पत्नीम् उक्तवान् - "भोः, अहं विवाहार्थं गच्छन् अस्मि । भवती द्वारं पिदधातु । यतः एतेषु दिनेषु चोरभीतिः अधिका जाता अस्ति" इति।

रामनाथस्य गमनस्य अनन्तरं तस्य पत्नी द्वारस्य पिधानं कृत्वा शयनं कृतवती। एतत् सर्वं गृहस्य पार्श्वे एव स्थिताः चोराः दृष्टवन्तः । तस्मिन् दिने चोरैः कुत्रापि किमपि न लब्धम् आसीत् । चोराः चिन्तितवन्तः - "रामनाथः तु बहिः गतवान् अस्ति। गृहे तस्य पत्नीं विना अन्यः कोऽपि नास्ति। इतोऽपि अन्धकारः अस्ति, रामनाथस्य गृहं प्रविशामः चेत् यत् किमपि लभ्यते एव" इति। ततः ते भित्तौ रन्ध्रं कृत्वा अन्तः प्रविष्टवन्तः । अन्तः दीपः अपि नासीत्। महान् अन्धकारः आसीत्। एषः एव चौर्यार्थं सुसमयः इति चिन्तितवन्तः ते।

तावति काले रामनाथः त्वरया प्रत्यागत्य द्वारताडनपूर्वकं पत्नीम् उत्थापितवान्। पत्नी द्वारम् उद्घाटितवती। तदा रामनाथः - "अहम् उत्तरीयं विस्मृत्य गतवान् आसम्" इति वदन् उत्तरीयं स्वीकृत्य पुनः गतवान्।

रामनाथस्य पत्नी पुनः द्वारस्य पिधानं कृत्वा शयनं कृतवती। तया किञ्चिदिव निद्रा यदा प्राप्ता, तदा चोराः पुनः अन्तः प्रविश्य अन्धकारे एव तण्डुलस्य स्यूतान् अन्विष्य तण्डुलस्यूतानां समीपे एकं वस्त्रं भूमौ प्रसारितवन्तः । तण्डुलाः तस्मिन् वस्त्रे पूरणीयाः नेतव्याः च इति तेषां विचारः

पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा

आसीत् । तावति काले रामनाथः पुनः प्रत्यागत्य त्वरया द्वारं सशब्दं ताडयन् पत्नीम् उत्थापितवान् । पत्नी द्वारम् उद्घाट्य पृष्टवती - "पुनः किं विस्मृतं भवता ?" इति।

"स्यूतं विस्मृत्य गतवान् आसम् । तम् आनयतु" इति पत्नीम् उक्तवान् रामनाथः । रामनाथस्य पत्नी तण्डुलस्य स्यूतानां समीपे स्थितम् एकं स्यूतम् आनीय पत्ये दत्तवती। अनन्तरं द्वारं पिधाय शयनार्थं गतवती । गमनसमये चोरैः तण्डुलनयनार्थं प्रसारितं वस्त्रं तस्याः पादे लग्नम् अभवत् । पादे लग्नेन वस्त्रेण एव सा आच्छाद्य शयनं कृतवती । चोराः एतद् न ज्ञातवन्तः ।

तया यदा निद्रा प्राप्ता, तदा पुनः चोराः 'अधः प्रसारितं वस्त्रम् अस्ति' इति मत्वा तण्डुलम् अधः स्थापितवन्तः । वस्त्रं बन्धुं वस्त्रस्य अञ्चलान् अन्विष्टवन्तः च।

परन्तु वस्त्रस्य अञ्चलम् एव न लब्धं तैः । तदा ते ज्ञातवन्तः यत् वयम् अधः भूमौ एव तण्डुलं पातितवन्तः इति।

इदानीं किम् करणीयं इति यावत् ते चिन्तनं कुर्वन्तः आसन्, तावता एव रामनाथः पुनः तृतीयवारम् आगत्य द्वारस्य ताडनं कृतवान्।

रामनाथस्य पत्नी द्वारम् उद्घाट्य उक्तवती - "प्रातःकालः जातः खलु ? गृहकार्यस्य आरम्भः करणीयः" इति। एतत् वचनं श्रुत्वा चोराः यस्मात् रन्ध्रात् प्रविष्टवन्तः आसन् तस्मात् एव निर्गतवन्तः। निर्गमनसमये आत्मना आनीतं धनस्यूतं विस्मृत्य गतवन्तः ते।

तृतीयवारं गृहं प्रत्यागतः रामनाथः आत्मना नेतव्यानि सर्वाणि वस्तूनि स्वीकृत्य गृहात् निर्गतवान्, योग्यकाले पार्श्वग्रामं प्राप्तवान् च।

पत्युः निर्गमनानन्तरं पत्नी गृहस्य परिशीलनात् भित्तौ रन्ध्रस्य दर्शनात् च प्रवृत्तं सर्वं ज्ञातवती।

आर्यपुत्रस्य त्वराशीलताकारणात् विना परिश्रमम् एतत् धनं प्राप्तम् इति सन्तोषं प्राप्तवती सा।



Say "Hello" to text books and friends
'Cause School days are here again
Have a great year and all the best
From Wobbit, Coon and the rest!








It's time to go back to school again. Time for text books. Time for games. Time to meet old friends. And make new ones. Time to start studying again. Because there's so much to learn about the world around you.





From all of us here at Chandamama, have a great year in school. And remember to tell us what you've learnt everyday, when you come home from school !






CHANDAMAMA

ARTIG 1246

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

## विजितां शीर्षिकां नवेम्बर् - १९९५ मासे प्रकटयिष्यामः ।



MAHANTESH C. MORABAD



MAHANTESH C. MORABAD

* उपरितनं चित्रद्वयं पश्यन्तु। * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा सप्टम्बर् - २० तः पूर्वम् एव प्रेषयन्तु। * अनन्तरम् आगतां शीर्षिकां न परिशीलयिष्यामः। * स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। * शीर्षिका समपत्रे (पोस्ट्-कार्ड्) एव लेखनीया। तत्र अन्यः विषयः न लेखनीयः। * अधोनिर्दिष्ट-सङ्केताय शीर्षिका प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, II घट्टः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

---

## 'जुलै' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः -

प्रथमचित्रम् - **क्वचित् शक्येत, क्वचित् न शक्येत, दाशपुत्रेण प्रभूतान् मीनान् सङ्ग्रहीतुम् ।**

द्वितीयचित्रम् - **कदाचिदपि न शक्येत प्रतिमाभ्याम् लतामेतां वर्धयितुम् ।**

प्रेषकः - कृ. रङ्गस्वामी, १०, अखिला, रङ्गनगरम्, श्रीरङ्गम् ।




Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.

अपने प्यारे चहेते के लिए जो हो दूर सुदूर
है न यहाँ अनोखा उपहार जो होगा प्यार भरपूर

# चन्दमामा




**प्यारी-प्यारी सी चंदामामा दीजिए उसे उसकी अपनी पसंद की भाषा में—**

आसामी, बंगला, अंग्रेजी, गुजराती, हिन्दी, कन्नड
मलयालम, मराठी, उड़िया, संस्कृत, तमिल या तेलुगु

**—और घर से अलग कहीं दूर रहे उसे लूटने दीजिए घर की मौज-मस्ती**

**चन्दे की दरें (वार्षिक)**

## आस्ट्रेलिया, जापान, मलेशिया और श्रीलंका के लिए

समुद्री जहाज़ से रु. 117.00 वायु सेवा से रु. 264.00

## फ्रान्स, सिंगापुर, यू.के., यू.एस.ए., पश्चिम जर्मनी और दूसरे देशों के लिए

समुद्री जहाज़ से रु. 123.00 वायु सेवा से रु. 264.00

**अपने चन्दे की रकम डिमांड ड्रॉफ्ट या मनी ऑर्डर द्वारा**
**'चन्दामामा पब्लिकेशन्स' के नाम से निम्न पते पर भेजिए:**

सर्क्युलेशन मैनेजर, चन्दामामा पब्लिकेशन्स, चन्दामामा बिल्डिंग्स, वडपलनी, मद्रास-६०० ०२६.